| विषयाः | पृष्ठं | श्लो० | विषयाः | पृष्ठं | श्लो० |
|---|---|---|---|---|---|
| सह्मानयनम् | .. ८९ | ३३ | -अन्तर्दशाफलानि | | |
| त्रिकालबलम् | .. ९६ | ५१ | रविमध्येऽन्तर्दशाफलम् | १०९ | ७ |
| सामान्यतो बलम् | .. ९८ | ५५ | चन्द्रमध्येऽन्तर्दशा० | ११० | १२ |
| निर्बलत्वम् .. | .. ९८ | ५७ | भौममध्येऽन्तर्दशा० | १११ | १८ |
| नष्टवीर्यम् .. | .. ९८ | ५८ | बुधमध्येऽन्तर्दशा० | ..११२ | २४ |
| चन्द्रनैर्बल्यम् .. | .. ९९ | ६० | गुरुमध्येऽन्तर्दशाफ० | ११२ | ३० |
| दशाक्रमानयनम् | ..१०० | ६२ | शुक्रमध्येऽन्तर्दशा० | ११३ | ३६ |
| पात्यांशाः .. | ..१०० | ६३ | शनिमध्येऽन्तर्दशा० | ११४ | ४२ |
| पात्यांशाचक्रम् | ..१०१ | ६३ | तासीरदशाक्रमः | ..११५ | ४८ |
| मतान्तरेण दशा[illegible] | | | [illegible]सीरदशा | ..११६ | ५० |
| यवनमते दशायन्त्रम् | १०२ | ६४ | स्थूलभावतासीरदशा | ११७ | ५१ |
| अन्तर्दशासाधनम् | ..१०२ | ६५ | मासप्रवेशः .. | ..११८ | ५२ |
| गुरुमध्येऽन्तर्दशाफलम् | १०२ | ६५ | मासप्रवेशसाधनम् | ..११८ | ५३ |
| दशाक्रमविशेषः | . १०३ | ६६ | सर्वेक्षोपरि मासप्रवेशः | ११८ | ५४ |
| रविदशाफलम् | ..१०४ | ६९ | मासप्रवेशफलानि | ..१२१ | ५७ |
| चन्द्रदशाफलम् | ..१०४ | ७४ | दिनप्रवेशानयनम् | ..१२३ | ६३ |
| भौमदशाफलम् | ..१०५ | ७९ | दिनप्रवेशफलम् | ..१२३ | ६४ |
| बुधदशाफलम् | ..१०६ | ८३ | भावफलम् .. | ..१२४ | ६८ |
| गुरुदशाफलम् | ..१०६ | ८८ | प्रवेशावस्थाफलम् | ..१२५ | ७३ |
| शुक्रदशाफलम् | ..१०७ | ९३ | आलेटकप्रश्नः | ..१२७ | ८७ |
| शनिदशाफलम् | ..१०८ | ९८ | भोजनचिन्ता .. | ..१२७ | ८८ |
| लग्नदशानयनम् | ..१०८ | ३ | स्वप्नचिन्ता .. | ..१२८ | ९५ |
| लग्नदशाफलानि | ..१०९ | ५ | ग्रन्थसमाप्तिः .. | ..१३२ | ९९ |


इत्यनुक्रमणिका समाप्ता ।

॥ श्रीः ॥

अथ हरिभद्रविरचितं

# ताजिकसारम्।

सटीकम्।

**श्रीरामस्य पदारविन्दयुगलं नत्वाथ वागीश्वरीं हेरम्बं तपनादिकं ग्रहगणं रुद्रं यशोदासुतम्॥ वक्ष्ये ताजिकसारमल्पसुगमं रम्यं सुबोधप्रदं नाना ताजिकतो विलोक्य रचितं दैवज्ञहर्षप्रदम् ॥ १ ॥**

॥ श्रीगणेशाय नमः ॥ श्रीसूर्य्यचन्द्रारबुधेन्द्रपूज्यान् भृग्वार्किमुख्यान्प्रणिपत्य खेटान् ॥ हृन्मानसस्वर्णसुबोधपद्मप्रबोधने तिग्मकरं गुरुं स्वम् ॥ १ ॥ श्रीशारदेयं शरदिंदुशुभ्रं तेजोक्षता ध्वान्त इवैकदीपम् ॥ निधाय चित्ते विवृणोमि ताजिकसारस्य तंत्रान् सुकरान्पदार्थान् ॥ २ ॥ विरच्यादौ बृहत्पर्वमालावृत्तिमथोद्यतः ॥ कर्त्तुं च कारिकामेतां शिष्यबोधकृते कृता ॥ ३ ॥ इह 'शिष्टा इष्टवस्तुनि प्रवर्त्तमाना अभीष्टदेवतानमस्कारं पूर्वमेव प्रवर्त्तते,इति शिष्टसमयपरिपालनाय 'श्रेयसि बहु विघ्नानि भवन्ति महतामपि। अश्रेयसि प्रवृत्तानां क्कापि यान्ति विनायकाः ॥ इति वचनात् ॥ अस्य शास्त्रस्य प्रारम्भे विघ्नौघोपशान्तये ग्रंथकृत्परमिष्टदेवतानमस्कारपूर्वकं मङ्गलाचरणमभिधेयं चाह। श्रीरामस्येति—अहं हरिभद्रनामा गणकस्ताजिकसारं वक्ष्ये, इत्यन्वयः। वर्षफलग्रंथानां ताजिक इति

पूर्वाचार्याणां संज्ञा । उक्तं च ताजिकनिबंधे—ब्रह्मणा कथितं भानोर्भानुना यवनस्य च ॥ यवनेनापि तज्ज्ञानं ताजिकस्य प्रकाशितम् ॥ तेन ताजिकशास्त्रेषु सारं प्रधानस्तम् । किं कृत्वा श्रीरामस्य पदारविन्दयुगलं चरणकमलयुग्मं वागीश्वरीं भारतीं अथानन्तर्य्ये हेरंबं गणेशं तपनादिकं सूर्य्यादिकं ग्रहगणं ग्रहसमूहं रुद्रमीश्वरं यशोदासुतं श्रीकृष्णं नत्वा मनोवाक्कायैः प्रह्वीकृत्य। किं विशिष्टं ताजिकसारं अल्पसुगमं शब्दतोऽल्पोऽर्थतः सुगमः इत्यर्थः ।पुनः किंविशिष्टं रम्यं मनोहरं पदलालित्येनातएवसुबोधप्रदम् ।पुनः किं विशिष्टं नानाताजिकतो विलोक्य रचितम्, अनेकताजिकशास्त्राणि विलोक्य रचितं कृतं 'सार्वविभक्तिकस्तम्'इत्यनेन द्वितीयार्थे तम्।पुनः किंविशिष्टं दैवज्ञहर्षप्रदं गणकानां.महदानंदकारकमित्यर्थः ॥

ननु शास्त्रेषु त्रिविधानां देवतानां स्तुतिः संभवति समुचितायाः इष्टायाः समुचितेष्टाया इति । तत्र समुचितायाः देवतायाः स्तुति र्यथा—नीतिशास्त्रारंभे राजादेः । कामशास्त्रारंभे स्मरादेः १ इष्टायाः स्तुतिर्यथा—रघुकाव्ये शिवगौर्य्योः २ समुचितेष्टायाः स्तुतिर्यथा—योगशास्त्रारंभे महावीरयोगनाथस्य ३ इति । अत्र शास्त्रारंभे श्रीरामस्येत्यादिशब्देनेष्टदेवतास्तुतिं चक्रे । तपनादिकमित्यनेनोचितदेवतास्तुतिं चक्रे कर्त्ता ॥ १ ॥

यत्पूर्वार्जितमात्मदेहजनितं दैवं शुभं वाऽशुभं तत्सर्वं हि विपाकमेति नियते वर्षादिकं निश्चितम् ॥ सर्वैः सम्मतमत्र जन्मनि परं जन्तोः स्फुटं सूरिभिस्तस्मात्तत्परिचिन्त्य वर्षजनितं वक्ष्ये फलं स्फूर्तिमत् ॥ २ ॥

अथ ग्रंथप्रयोजनमाह—यत्पूर्वार्जितमिति—यत्तदोर्नित्य-
सम्बन्धात् यस्मात्कारणात् यत्पूर्वार्जितं पूर्वजन्मनि उपचिते
आत्मदेहजनितम् आत्मशरीरोणोत्पादितं शुभं वा अशुभं दैवं
त्कर्म तत्सर्वं हीतिपादपूरणेऽव्ययम् । अत्र जन्मनि इह भवे
मेयते निर्णीते वर्षादिके वर्षमासदिनादौ सति जन्तोः प्राणिनः
निश्चितं परं विपाकं फलम् एति फलतीत्यर्थः। तस्मात्कारणात् ।
त्परिचिंत्य विमृश्य वर्षजनितं फलं वक्ष्ये । किं फलम् । सर्वैः
सूरिभिः सम्मतं, पुनः किं स्फुटं प्रकटं पुनः किं स्फूर्तिमत् जाग्रत् ।

**यातो वर्षगणो हि जन्मसमयात्स्थाप्यश्चतुर्द्धा क्रमात् पञ्चागाग्निभि ३७५ रिन्द्रियेन्दुभि १५ रिलारामैः ३१ खरामै ३० र्हतः ॥ जन्माहर्गण-नाडिकापलयुतः स्यात्स्पष्टवर्गादिगो यातोह्नां निचयो यथा जनिदिने यद्ग्रन्थितः साधितः॥३॥**

अथाहर्गणादिसाधनमाह—यातो वर्षगणइति—जन्म-
समयात् यातो गतो वर्षगणोऽब्दसमूहः चतुर्द्धा स्थाप्यः।जन्मशके
इष्टशाकाच्छोधिते शेषं गताब्दाः। उक्तं च—जन्मशाकमथ ज्ञा-
त्वा चेष्टशाकाद्विशोधयेत् ॥ शेषं तत्र भवेद् यच्च गतवर्षगणो
भवेत् ॥ १ ॥ ततः क्रमाद्गताब्दाः पञ्चागाग्नि ३७५ भिरि-
न्द्रियेन्दुभि १५ रिलारामैः ३१ खरामै ३० र्हतो गुणितः
अधस्तात् पङ्क्त्या च स्थाप्य उपरि जन्माहर्गणनाडिकापल-
युतो जन्मकालीनेनाहर्गणेन उदयादिष्टघट्यादिना च युक्तः
सन् इष्टवर्षादिगः यातो गतोऽह्नां निचयोऽहर्गणः स्यात् ।
कीदृग् जनिदिने यद्ग्रन्थतो यथासाधितः तादृश इत्यर्थः ।
तदुक्तं भवति । जन्मदिने यत्करणग्रंथादानीतः तत्करणग्रंथ-

तुल्यो शय्यागतः इति वेदितव्यम् । यथा–संवत् १५९२ वर्षे शाके १४५७ प्रवर्त्तमाने ज्येष्ठशुक्ल ५ घटी ३५ परं षष्ठ्यां तिथौ भृगुवासरे पुनर्वसुनक्षत्रे उदयाद्गतघटी ५३ समये महोपाध्याय श्रीहर्षरत्नमणीनां मम गुरूणां जन्म करणकुतूहलग्रन्थोपरि गताब्दाः ३५३ अधिकमासाः १३० मासगणः ४३५६अवमदिनानि२०४४ उदयेऽहर्गणः १२८६४० जन्मकालीनो रविः१।१।२६।४६॥अथ वर्षफलकरणम्॥तत्रेष्टशाकात् १५१६ जन्मशाकः १४५७शुद्धः शेषं गताब्दाः५९ एते चतुर्द्धा स्थापिताः ५९।५९।५९।५९ यथाक्रमेण ३७५। १५।३१।३० एभिर्गुणिता षष्ट्या २ उपर्युपरि स्थापिते त्रिधा फलं ग्राह्यं २८५५०।१५।५८।३०अस्मिन्जन्माहर्गणघटीपलानि १२८६४० घटी ५३ युतानि । यातो वर्ष ६० प्रवेशसमयिको दिनगणः १५०१९१।८।५८ वर्षम् ॥ ३ ॥

अथवा ॥ समाभ्रदस्राश्विखगाश्वि २९२२०७ निघ्नो यातोऽब्दवृन्दः खखसर्प८००भक्तः॥ फलं दिनाद्यं स च घस्रवृन्दे युक्तः स्फुटो वा द्युगणोऽब्दकाले ॥ ४ ॥

अथ प्रकारान्तरेणाहर्गणानयनम्॥ समाभ्रदस्राश्वीतिघस्रवृन्दे जन्मसमयोत्थाऽहर्गणघटीपले युक्तः।शेषं स्पष्टम्।यथा गताब्दाः ५९ समाभ्रदस्राश्विखगाश्विभि २९२२०७ गुंणिता जाताः १७२४०२१३ खखसर्पै ८००र्भक्ता लब्धं त्रिधा फलं २१५५०।१५।५८ एतज्जन्माहर्गणघटीपलेषु १२८३१ ०।५३।० युक्तं१५०१९१।८।५८जातो वर्षादिग्रोहर्गणः ॥४॥

अथाहर्गणादिष्टवर्षसाधनम् ॥ रुद्र ११ घ्नो द्युगणोदिनंदरस ६९२हृल्लब्धेन युक्तो गणो भक्तः शून्यगुणै ३० श्च मासनिकरः स्याच्छेपतस्तत्तिथिः॥ पक्षैः १५ सन्निहितस्त्वसौ गुणवियद्बाणै ५०३ रवाप्तं च यत्सैकं स्युस्त्वधिमासका विरहिताः कार्यांश्च मासव्रजात् ॥ ५ ॥ सूर्यां १२ प्ता गतवत्सराश्च सहितास्तत्करणशाके ततो मासाः शेषमिता हि वर्षसमयो ह्येवं निरुक्तो बुधैः॥कर्त्तव्याः खचरास्ततः स्फुटतरा भावा द्युनन्दात्ततो दृक्पश्चाद्धि विचारणामिव ततो वीर्य्याणि संसाधयेत्६॥

अथाहर्गणादिष्टसाधनमाह—रुद्रघ्नो द्युगण इति—पूर्वागतः सावयवोऽहर्गणः रुद्र ११ घ्नःएकादशभिर्गुणितः दिनंदरसै ६९२ भक्तः लब्धेनाहर्गणो युक्तः शून्यगुणै ३० र्भक्तो लब्धं मासगणः शेषस्तिथिः स्यात् ॥ ततोसौ मासगणो पक्षैः १५सन्निहितो गुणवियद्बाणै ५०३ र्भक्तो यदवाप्तं तत्सैकं एकेन सहितं अधिमासास्ते अधिमासाः मासव्रजान्मासगणाद्विरहिताः कार्य्याः शोध्याः ततो द्वादशभक्ताः गताब्दाः तेन गताब्दाःस्तत्करणशाके यस्मात्करणग्रंथादहर्गणः कृतः तस्य शाको योऽपः स इष्टशाकः द्वादशभक्ते शेषमिता गतामासाः चैत्रादयो ज्ञेयाः। एवं बुधैर्वर्षसमयो निरुक्तः।शेषं स्पष्टम्। यथा स्थापितः सावयवोऽहर्गणः १५०१९१।८।५८ रुद्रै ११ गुणितः १६६२१०२ शेषं त्याज्यम्। दिनंदरसै ६९२ भक्ते लब्धं अवमदिनानि २३८७ एभिरहर्गणे १५०१९१ युक्तः १५२

५७८ शून्यगुणैर्भक्तो ३० मासगणः ५०८५ शेषतिथयः २८ मासगणः ५०८५ घस्रै १५ गुणितः ७६२७५ गुणविषद्वाणै ५०३ भक्ते लब्धं १५१ सैकं १५२ जाता अधिमासाः। एभिर्मासगणो हीनः ४९३३ द्वादशभक्तो लब्धं गताब्दाः ४११ शेषं १ मनः। गताब्दैर्ब्रह्मतुल्यशाको ११०५ युतो जातः इष्टशाकः १५१६। एवं शाकमध्यश्चैत्रादिश्चेत् तदा १३४ योज्या आषाढादिश्चेत्तदा १३५ योज्याः। उक्तं च—श्रीविक्रमो वेदगुणेन्दु १३४हीनश्चैत्रादिमासत्रयसंज्ञकेषु॥मासे शुचःपंचविश्वैः १३५ रेवं भवेच्छाकनृपप्रमाणः १ अत्रादिस्तेन १३४ युता एवं संवत् १६५०वर्षे शाके १५१६प्रकारान्तरेण चांद्रवैशाखसुदी लौकिकज्येष्ठवदी १३बुधे तद्दिनोदयात्गतघटीः५।५८तत् समये ६० प्रवेशः महोपाध्यायश्रीहर्षरत्नमणीनाम् ॥ ५ ॥ ६ ॥

अथवा ॥ त्रिखाद्रि ७०३ निघ्ना द्युगणाद्विभक्ता द्विनन्दतर्कैः ६९२ पृथगाख्यकं तत् ॥ रसाभ्रदिग्भि १००६ र्विहृतं फलाख्यं सैकं खरामै ३० र्निहतं विहीनम् ॥ ७ ॥ पृथक्स्थिते चाभ्ररसाग्निभक्तं ३६० फलं गताब्दा विहृतं खरामैः ३० शेषं भवेन्मासमितिश्च चैत्रात्तिथेर्मितिः शेषमिता विचिंत्याः ॥ ८ ॥

अथ प्रकारान्तरेणेष्टदिनानयनम्—त्रिखाद्रिनिघ्ना इति—पृथक्स्थितेति—अभ्ररसाग्नि ३६० भिर्भक्ते लब्धं फलं गताब्दाः स्युः। शेषं खरामै ३० र्विहृतं भक्तं लब्धं चैत्रान्मासमितिर्भवति। शेषमितास्तिथेर्मितिः प्रमाणं वाच्यमृशेषं स्पष्टम्।

उदाहरणम्–स्थापितोऽहर्गणः सावयवः १५०१९।१।८।५८ त्रिखाद्रिभिर्गुणितो जातः १०५५८४३७८। द्विनन्दतर्कै ६९२ र्भक्ते लब्धं १५२५७८। पृथक् स्थाप्यं १५२५७८ एकत्र र-साभ्रद्विभि १००६ र्भक्ते लब्धं १५१। सैकं १५२ खरामै ३० र्गुणितो ४५६०। अनेन पृथक् स्थितं १५२५७८ हीनं जातं १४८०१८। अभ्ररसाग्निभिर्भक्ते लब्धं गताब्दाः ४११ शेषं ५८ खरामैर्भक्ते लब्धं मासः १ शेषं तिथयः २८ ॥ ७ ॥ ८ ॥

अथ प्रकारान्तरेण–द्वाभ्यां २ कृतै ४ स्तीक्ष्ण-करै १२ स्त्रिधाऽब्दो निघ्नो गजैः संविहृते फलं यत् ॥ साब्दं ततो जन्मकवारमुख्यैर्युक्तं भवेद्वा-ब्दनिवेशवेला ॥ ९ ॥

अथवर्षस्य वाराद्यानयनम्। द्वाभ्यां कृतैरिति–स्पष्टार्थः। यथा गताब्दाः ५९ त्रिधा ५९।५९।५९ यथा क्रमेण द्वाभ्यां २ कृतै ४ स्तीक्ष्णकरैः १२ गुणिताः १२२।७।४८ गजैर्भक्ते लब्धं १५।१५।५८ उपरि गताब्दैः ५९ युक्तं ७४।१५।५८ जन्मक-वारमुख्यैः ६।५३।० युतं ८१।८।५८ उपरि सप्तभक्ते शेषं ४। ८।५८।३० ॥ ९ ॥

अथवा ॥ बाणै ५ र्यमै २ स्तर्क ६ मितैस्त्रिधाब्दा नि-घ्ना कृता ४ प्ता दिवमादिकं तत् ॥ आद्यं समेतं नि-जवारपूर्वैः स्यादब्दवेशो ह्यथवा दिनाद्यम् ॥१०॥

पुनः प्रकारांतरेण वारादिसाधनम्–बाणैर्यमैरिति–यथा त्रिधा गताब्दाः ५९।५९।५९ क्रमेण बाणै ५ र्यमै २ स्तर्क ६ मितैर्गुणिता २९७।३।५४ कृतै ४ र्भक्ते लब्धं ७४।१५।५८

जन्मर्क्षवारमुख्यैः ६।५३।० युतं जातं वर्षप्रवेशवारादि ४।८। ५८ ॥ १० ॥

अथ तिथ्यानयनम् ॥ यातान्दवृन्दो गुणवेदरामै ३४३ र्निघ्नः कुरामै ३१ र्विहृतो दिनाद्यम् ॥ घस्रैः सहोत्थैः सहितं खरामै ३० र्भक्तं च शेषात्तिथिरत्रवर्षे ॥ ११ ॥

अथतिथ्यानयनम् ॥ यातान्दवृन्द इति—यथा गताब्दाः ५९ गुणवेदरामै ३४३ गुणिताः २०२३७ कुरामै ३१ भक्ते लब्धं ६५२।४८ जन्मोत्थदिनैः शुक्लप्रतिपत्प्रभृतिभिर्गतैः ५ घटी ३५ युक्तं ६५८।२३ उपरि खरामै ३० र्भक्ते शेषं शुक्लपक्षे तिथयः २८। अत्र तिथ्यानयने यस्यां तिथौ पूर्वास्थो वारो भवति सा तिथिर्ग्राह्या। यतो वार एव नियामकः॥११॥

अथ नक्षत्रयोगानयनम्॥व्योमेंदुभिः १०संगुणिता गताब्दाः खशून्यवेदाश्वि २४० लवैर्विहीनाः ॥ जन्मर्क्षयोगैः सहिता पृथक्स्था नक्षत्रयोगौ भवतो भ २७ तष्टौ ॥ १२ ॥

अथ नक्षत्रयोगानयनम्। व्योमेंदुभिरिति—भवतष्टौ सप्तविंशति२७भक्तौ शेषं स्यादम्। यथा गताब्दाः ५९ दशगुणिताः ५९० पृथक् स्थाप्यं ५९० शून्यवेदाश्विभि२४० र्भक्ते लब्धं १ अनेन उपरि ५९० हीनं ५८८ एकत्र जन्मनक्षत्रे ८ युतं ५९६ भैर्भक्ते २६ शेषं२एतन्नक्षत्रं भरणी गता। अन्यत्र५८८ योगैः ११ सहिताः५९९ भै २७ र्भक्ताः शेषं ५ शोभनाख्यो योगः ॥ १२ ॥

अथ संक्रान्तिवारानयनम्॥ शाको बाणयुगाब्धिचन्द्ररहितः १४४५ सप्ताभ्रदस्रै २०७ र्हतो भक्तः शून्यखकुञ्जरैः ८०० फलमिदं वारादिकं सांप्रतम्॥ याताब्दैश्च नगाप्तमेव तपनात्संक्रान्तिसंज्ञो ध्रुवो युक्तोऽसौ निजक्षेपकैर्दिनमुखैः संक्रान्तयः स्युः स्फुटाः ॥ १३ ॥

अथ संक्रान्तिवारानयनम्। शाको बाणेति—याताब्दइति यावंतो ग्रंथतोऽब्दा गतास्तैर्युतं तपनात्सूर्यवारतो गण्यः शेषं स्पष्टम्। यथा शाकः १५१६ बाणयुगाब्धिचंद्रैः १४४५ रहितः एते ग्रन्थारम्भतो गताब्दाः सप्ताभ्रदस्रै २०७ गुणिते जातं १४६९७ शून्यखकुंजरै ८०० भक्ते लब्धं १८।२२।१६ गताब्दै ७१ युक्तं ८९।२२।१६ उपरि सप्तभक्ते शेषं ५।२२।१६ संक्रान्तिसंज्ञोऽयं ध्रुवः। अस्य मध्ये द्वादशराशीनां स्वैः स्वैः क्षेपकैर्युक्ते वारादिसंक्रान्तिर्भवति। यथा ध्रुवः ५।२२।१६ मेषसंक्रान्तिक्षेपेण ६।५८।२० युतो जातः १२।२०।३६ उपरि सप्तभक्ते शेषं ५।२०।३६। एवं तिथिपत्रे गुरुवासरे घटी २०।३६ मेषसंक्रान्तिर्लग्ना। एवमन्या अपि संक्रान्तयो ज्ञेयाः ॥१३॥

अथ संक्रांत्यंतरालक्षेपकानि क्षिप्तानि लिख्यंते॥ रसा ६ इभाक्षा ५८ खयमा २० भुवोजे वृषे यमा २ बाणशरा ५५ जिनश्च २४॥ रसाः ६ खपक्षा २० त्रिशरा ५३ श्च युग्मे २ कर्केऽश्विनौ २ दंतिशरा ५८ इभाश्च ८॥ १४ ॥ सिंहे रसा ६ स्तर्कयमा २६ स्त्रिपक्षा २३ स्त्रीभेयमा २ सर्पकराः २८

खपक्षाः २० ॥ जूकेऽध्ययः ४ पंचशराः ५५ कुचंद्राः ११ कौर्प्ये रसा ६ दंतिकृताः ४८ खदस्राः २० ॥ १५ ॥ चापे भुवः १ सप्तभुवो १७ द्विचंद्रा १२ मृगे करा २ स्तर्कगुणा ३६ स्त्रिवेदाः ४३ ॥ युगानि ४ रामा ३ स्त्रियमा २३ श्च कुंभेमीने शरा ५ द्दग्विशिखाः५२खपक्षाः२०॥१६॥

अथ संक्रान्तिक्षेपान्वृत्तत्रयेणाह—रसा इत्याद्या इति, सिंहे रसा इति, चापे भुव इति–सुकराः यन्त्रे लिखिताः ॥ ॥ १४ ॥ १५ ॥ १६ ॥

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | क्षेत्रम |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | २ | ६ | २ | ६ | २ | ४ | ६ | १ | २ | ४ | ५ | वाराः |
| ५८ | ५५ | २० | ५८ | २६ | २८ | ५५ | ४८ | १७ | २६ | ३ | ५२ | घट्य, |
| २० | २४ | ५३ | ८ | २३ | २० | ११ | २० | १२ | ४३ | २३ | २० | पलानि |
| ० | १ | २ | ७ | ९ | १० | १० | १० | १० | १० | १० | १० | १० |

अथ तिथ्यानयनम्॥शाको बाणयुगाब्धिचंद्र १४४५ रहितो रुद्रै ११ र्हतोऽथो वियन्नागेला१८० प्तफलाधिको भव ११ युतः खाग्नु ३० द्धृतः शेषकम् ॥ क्षेपाः खेन्दनलेषु ३१० सप्त ७ खचरा शेषे दशा स्वे क्रमाद्युक्तं द्वादशधा १२ स्थितं हि तिथयः स्थूलाश्च संक्रान्तिजाः ॥ १७ ॥

अथ संक्रान्तितिथ्यानयनमाह–शाको बाण इति–स्वैः तिथिक्षेपैः शेषं द्वादशधा स्थितं युतं सत् संक्रान्तिजाः स्थूलास्तिथयः स्युः स्थूला इति ग्रहणादारपवनियामकः पूर्वागते वारे या

तिथिर्भवति सा ग्राह्या इत्यर्थः। शेषं स्पष्टम्। यथा शाकः १५१४ बाणयुगाब्धिचन्द्रैः १४४५ रहितः ७१ रुद्रै ११ र्हतः ७८१ पृथक् स्थाप्यः ७८१ वियन्नागेलाभिः १८० वियत्सप्तैला १७० पातः भक्ते लब्धं ४ उपरि ७८ युक्ते जातं ७८५ भव ११ युतं ७९६ खाग्न्युद्धृतं ३० शेषं १६ लब्धस्य प्रयोजनं न। अयं ध्रुवः स्वस्वसंक्रान्तितिथिक्षेपैर्युतस्तिथिर्भवति। यथा मेषसंक्रान्तितिथि क्षेपेण ध्रुवः १६ युतं १६ एवं कृष्णप्रतिपदि मेषसंक्रान्तिर्ज्ञेया। एवमन्यापि तिथिः कार्या।परं वारनियामक इति रहस्यम्॥ १७॥

अथ द्वादशराशिस्वरूपम्॥ रूक्षः शैलचरश्चरोऽङ्घ्रिचरणो रक्तोऽतिशब्दोऽल्पसूः प्राग्दिक्स्थो विषमोदयी दिनचरो मेषो नृसंज्ञो वृषः॥ स्त्री शुक्लो विषमोदयः स्थिरतनुर्याम्येश्वरो रात्रिगः शीताभः पृथिवीचरोऽङ्घ्रिचरणो रूक्षो हि मध्यप्रजः॥ १८॥

अथ राशिस्वरूपमाह रूक्षइति—मेषोऽल्पसूः स्वल्पसंतानः॥ १८॥

युग्मो मध्यसवः शुकच्छविसमो ना द्विस्वभावोऽणकः शूद्रो ग्रामचरो हि पश्चिमपतिः स्निग्धोऽतिशब्दो द्विपात्॥ कर्कस्तीक्ष्णपदा चरो बहुसवः स्निग्धोऽथ सौम्येश्वरो बह्वङ्घ्रिर्जलगश्च पाटलतनुः श्लेष्माधिकः शीघ्रगः॥ १९॥

युग्म इति—युग्मो मिथुनः मध्यसवो मध्यसंतानो नात्यल्पं नातिबहुसंतानः। कर्को बहुसवः बहुप्रसूतसंततिः॥ १९॥

सिंहोऽल्पप्रसवः स्थिरोऽन्घ्रिचरणो रुक्षो द्युचारी
दृढः प्रागीशो वनगोऽथ धूसरतनुः शब्दाधिकः
पैत्तिकः ॥ स्त्रीराशिस्तुहिनो द्विपत्क्षितिचरः स्त्री
द्विःस्वभावोऽल्पसूः ॥ रुक्षो रात्रिचरश्च शुभ्ररु-
चिकः स्वल्पो ह्रसी याम्यपः ॥ २० ॥

सिंह इति—स्त्रीराशिः कन्यासहितः ॥ २० ॥

जूकः पश्चिमदिक्प्रभुश्चरगतिः स्वल्पप्रजः स्नेहवा-
न् चित्राभो मनुजोऽणकोथ सुकृशः कौर्प्यो वि-
शब्दो द्युगः ॥ शुक्रो रात्रिचरः स्थिरो जलचर-
स्तुल्योऽद्गमी चाल्पसूः स्निग्धः स्त्रीबहुपादतः क-
फयुतः सौम्येश्वरः शून्यकः ॥ २१ ॥

जूक इति—जूकस्तुला चित्राभो विविधवर्णः शूरो विश-
ब्दः शीतलः तुल्योद्गमी समोदयः कौर्प्यो वृश्चिकः ॥ २१ ॥

पूर्वार्द्धं धनुषे द्विपात्करकक्कुप्स्वामी द्युगो निस्वनो
हेमाभो द्विशरीरको लघुतरोशीतस्तु तुल्योद्गमी ॥
एणोन्घ्रिप्रपदोऽल्पसूर्जलचरःस्यातश्चरो रात्रिगः
स्त्री रुक्षस्तुहिनोऽथ पिंगलतनुः शब्दार्थसंलक्षितः
॥ २२ ॥ कुंभः पश्चिमदिक्प्रभुः स्थिरतनुः शू-
न्यो विपादः पुमान् स्निग्धांऽभः प्रसवोऽल्पको ज-
लचरो घस्रानुगोऽल्पोक्तिकृत् ॥ मीनोरात्रिचरो

ऽम्बुगश्च विपदः स्त्री द्विःस्वभावः कफी स्निग्धो भूरिसवोऽर्द्धशब्दसहितः सौम्येश्वरः पिंगलः ॥२३॥

पूर्वार्द्धमिति—एणो मृगोऽविधमपदश्चतुश्चरणः शेषं स्पष्टम् ॥ २२ ॥ २३ ॥

दीर्घः कर्कभृतः षडेव कथितास्तुल्योदयात्पणभृगात् ह्रस्वाः स्युर्विषमोदयात्क्रियघटौ तुल्यौ निरुक्तौ च तौ ॥ मैत्री स्यात्सबला स्ववर्गविषयेऽहोरात्रिगानां भृशं चिन्त्यं राश्यनुसारतो हि सबलं प्राज्ञैः फलं राशिजम् ॥ २४ ॥ इति द्वादशराशिस्वरूपम् ॥

*अथ मनुष्याणां ह्रस्वत्वदीर्घत्वसमत्वज्ञानाय राशीनां दीर्घह्रस्वसमज्ञानमाह—*

दीर्घ इति—क्रियघटौ मेषतुले तुल्यौ नातिदीर्घौ नातिह्रस्वौ शेषं स्पष्टं ॥ अहोरात्रिगानां लग्नानां स्ववर्गविषये सबला मैत्री । यथा—मेषसिंहधनुषोऽग्नयः वृषकन्यामृगाभूमयः मिथुनतुलाकुंभा वायवः कर्कवृश्चिकमीना जलानि इति । अग्निवायुराशीनां मिथो मैत्री॥भूमिजलराशीनां मिथो मैत्री।एवं पुरुषराशेः पुरुषराशीनां मैत्री । स्त्रीणां स्त्रिया । दिवाचराणां दिवाचरैः । रात्रिचाराणां रात्रिचरैः । उक्तं च संज्ञातंत्रे—अग्निर्भूमिर्वायुर्वारि त्रैराशिकाख्याश्च अग्निसमीरौ॥पुरुषौ दिवाचरौ भूजले स्त्रियौ॥ निशिगौ निजवर्गे मित्रत्वं परवर्गे शत्रुता च वयोरिति ॥२४॥

अथ ग्रहस्वरूपम्॥प्राचीशः स्थविरो दृढो वनचरः क्षत्री पतंगादियात्पित्ताढ्यो नृपतिः पुमान् कटु-

तरो दुष्टः पशु र्हेम रुक्॥ चंद्रो रात्रिचरः कफी सुनयनः स्थूलः प्रलम्बो घृणी गौरो वैश्यपतिर्मृदुर्जलचरो वायव्यदिक् स्त्रीग्रहः ॥ २५ ॥ माहेयश्च-पलश्च दुष्टखचरः क्षत्री चतुष्पात्कटुर्याम्येशो वनगोऽरुणः सुतनुवान् हिंस्रो युवा दग्धभूः ॥ सौम्यो मार्गचरः शिशुः शुभखगः शूद्रोऽथ सौम्याधिपः स्त्रीखेटः कनकप्रभुः सुमतिमान् जीवः सुवृत्तः खगः ॥ २६ ॥

अथ ग्रहस्वरूपमाह ॥

माहेय इति—सौम्यो बुधः जीवो जीवचिन्ताकारकः सुवृत्तो वर्त्तुलः खगः पक्षी। पक्षिणौ बुधसौरी इति वचनात्॥२५॥२६॥

जीवो ग्रामचरो द्विपाच्छुभखगः पीतो द्विजो वर्त्तुलो वित्तेशो मधुरो वणिङ् नरवरो ह्यैशानदिक्पालकः ॥ शुक्रः स्त्री जलगो द्विजः क्षितिचरः श्लेष्मान्वितोऽथो द्विपात् रूक्षाभो चलगोऽतिसौम्यखचरस्त्वाग्नेयपश्चाम्लकः ॥ २७ ॥ मन्दः कृष्णतनुः स्थिरो वनचरो लोहः कृशो वानिलो दीर्घो म्लेच्छपतिः खलो वरुणदिक्स्वामी खगस्तुंबरः ॥ प्राहुर्मन्दवदत्र केचन बुधा राहुर्निषादोऽस्थिपः सर्पः सोथ सर्वान्ददृष्टिविषये चेत्थं ग्रहाणां फलम् ॥२८॥ इति ग्रहस्वरूपम् ॥

मन्द इति—शनिस्तुंबरःकषायरसः खगःपक्षी।राहुःशनिवत्

क्षेपः परं सोपि राहुःनिषादः निषादजातिर्ज्ञेयः अस्थिपः अस्थिस्वामी सर्पो भुजङ्गःउक्तं च संज्ञातन्त्रे—शनिवद्राहुर्ज्ञेयः सर्पोऽपि निषादजातिरपितज्ज्ञैरिति॥सवाब्दद्दष्टिविषये सवो जन्मकालेऽब्दः वर्षसमयस्तयोर्दर्शनविषये अवलोकने इत्थं पूर्वोक्तं ग्रहाणां फलं ज्ञेयम् ॥ २८ ॥

अथ भावस्वरूपम् ॥ तन्वादिभावास्तनुवित्तबन्धुसुहृत्सुतारिप्रमदाविनाशाः ॥ धर्मास्यकर्मायइति व्ययश्च लग्नं तथा राशिगृहं च होरा ॥२९॥ सुखासुखं क्लेशवयःप्रमाणं हानिस्तथा वर्णविचिंतनं च॥शीलादिजातिस्तनुतो धनांश्च मैत्रीं तथा राशिगृहं च होरा द्रव्यादिधात्वाद्यखिलं विचिंत्यम् ॥ ३० ॥

अथ भावस्वरूपमाह—

तन्वादिभावा इति—शीलादिजातिः शील आचारः जातयः ब्राह्मणाद्याः ॥ २९ ॥ ३० ॥

सहोत्थसौख्यं सहजादिचिन्त्यं सुखासुखं क्षेत्रगृहप्रवेशाः ॥ आराममैषज्यनिधिप्रकार्यं सुताच्च विद्यात्सुतसौख्यकं च ॥ ३१ ॥ कुष्ठभंगेहादिरुजो व्रणानि पराङ्गनामातुलवर्गकादि ॥ दासादिकं धान्यचतुष्पदाद्यं चिंत्यं हि शत्रोर्भवनाच्च सर्वम् ॥ ३२ ॥ मदाच्चवाणिज्यविवादचौर्यं दुरोदरं स्त्री च गमागमादि ॥ मृतेश्च मृत्युश्चिरवस्तुकाद्यं रुग्ण्याकुलाद्यं खलु नष्टमायुः ॥ ३३ ॥

दुरोदरं द्यूतम् ॥ ३१ ॥ ३२ ॥ ३३ ॥

दीक्षाध्वयात्राखिलधर्म्मभाग्यं पुरादिगेहाद्यखिलं च धर्म्यात् ॥ कर्माच्च वृत्तिः क्रयविक्रयादि स्वाचारकर्माऽखिलराजकार्य्यम् ॥ ३४ ॥ लाभात्सुखार्थागमनं विलासमकुप्यकुप्यायपदं कणाद्यम् ॥ व्ययाद्व्ययेऽरिव्यसनं स्वबन्धुविद्विपकूटाद्यखिलं विलोक्यम्॥३५॥इति भावस्वरूपम्॥

लाभादिति—अकुप्यकुप्येति घटिते च सुवर्णे रूप्ये च अकुप्यं नाम उच्यते । स्थालकादिघनं नाम कुप्यं रूप्यहेमाख्यं 'कुप्यमन्यधनं भवेदिति' हलायुधः॥३४॥३५॥

अथ ग्रहसाधनम्॥विना ग्रहैः स्पष्टतरैर्न किञ्चित्फलं प्रवक्तुं नितरां क्षमः स्यात्॥यतः खगानां फलसाधनार्थं क्रमाद्ब्रुवे दैवविदां हिताय ॥ ३६ ॥ गतघटीभिरथोन्तरजा लवा विनिहता निखिलर्क्षघटीहृताः ॥ लवमुखेन युतो गतखेचरस्तदपि वक्रगते रहितः स्फुटम् ॥ ३७ ॥

अथ गत्यानयनम् । गतघटीभिरिति—अथो आनन्तर्ये गतगम्ययोर्ग्रहयोरन्तरजा लवा अंशा गतघटीभिर्गतेष्टघटिकाभिर्विनिहता गुणिताः निखिलर्क्षघटीहृताः सर्वर्क्षघटीभक्ताः लब्धेनांशादिना गतो ग्रहो युतः सन् स्पष्टः स्यात् । तदपि लवादि वक्रगते वक्रिणि गते रहितः कार्यः स्पष्टः स्यात् ॥३६॥३७॥

अथ वक्रग्रहगत्यानयनम्। षष्ट्या ६० हता अन्तरभागलिप्तिका अधःस्थिताभिर्विकलासमन्वि-

ताः ॥ सर्वर्क्षनाडीविहृतास्तु वक्रिणां मार्गे स्थितानां च कलादिका गतिः ॥ ३८ ॥

अथ वक्रग्रहत्यानयनम्॥षष्ट्या हृता इति—स्पष्टम्॥३८॥

श्रीसूर्यतुल्या करणोत्तमाद्या स्पष्टा ग्रहा राजमृगांकतश्च ॥ पञ्चाङ्गपत्रादथ वच्मि सम्यक् सुसंप्रदायाद्विदुषां सुखार्थम् ॥ ३९ ॥ खखवियद्गजवेदमिताः कलाः ४८००० दिनगतिः खलु सर्वघटीहृताः॥अथ शराब्धियुगैः ४४५ रहितः शको व्यधहतः खरसैः ६० स्वनवांशकाः ॥ ४० ॥ इति ग्रहसाधनम् ॥

अथ रविस्पष्टीकरणं । तत्र पूर्वगतेष्टनाडीकरणं तत्र लौकिकज्येष्ठवद्यचतुर्थ्यां रविवासरे वृषसंक्रान्तिः घटी १७ पलं३३ उपरान्तं लग्ना तेनैष्यघटिकाः ४१।४७। अथ त्रयोदश्यां तिथौ उदयाद्गतघटी८।५८ समये रवेः स्पष्टीकरणं तेन तद्दिनघटिकाः ८।५८वृषसंक्रान्तिप्रवेशदिनेष्टदिनयोर्मध्ये दिनानि ९ एतेषां घट्यः ५४० एवमेतासां त्रिषु स्थानेषु स्थितानां घटीनां ४१। २७।८।५८।५४० योगो गतैष्यघटिका ५९१।२५ । अथ सर्वर्क्षनाडीकरणं वृषसंक्रान्तेर्घट्यः४२।२७ ततः परं त्रयोदश्यां घट्यः ४३।३०, यावत्कृत्तिकायां रविस्ततो रोहिण्यां तेन तद्दिने घटिकाः ४३।३० वृषसंक्रांतिदिवसे रोहिणीनक्षत्रे यस्मिन्दिने रविरागतस्तयोर्विवरे दिनानि९तेषां घट्यः ५४० एवं सर्वासां ४२।२७।४३।३०।५४० योगः । अर्द्धाभ्यधिकत्वात् एका घटी अधिका कार्य्या सर्वर्क्षघट्यः ६२६ ।गतघटीभिरथों

तरजालवा इति इष्टकालात्पूर्वं वृषादौ गतग्रहः ११०।०।० इष्टकालादग्ये रोहिण्यादौ गम्यो ग्रहः१११०।०।० उभयोरंतरजांशाः११०।०।०गतघटीभिः४९।१२५ गुणिताः ५९१४।१० सर्वर्क्षनाड्यः ६२६ भक्ता लब्धेनांशादिना ९।२६।५१ गतग्रहो ११०।०।० युतः ११९।२६।५१ जातः इष्टकालिकः स्पष्टो रविः। अथ गतिसाधनं-खखवियदिति---खखवियद्गजवेद ४८००० मिता विकलाः सर्वर्क्षघटीहृता भक्ताः सत्यः कला इति कलाद्यागतिर्भवति। शेषं स्पष्टं। समग्रनक्षत्रे ४८००० एता विकला ग्रहाः एकस्मिन्नक्षत्रे पादे २०० कला चतुर्षु पादेषु ८०० कला भवन्ति तेनैकस्मिन्पादे २०० कलाःषष्ट्या संगुण्य सर्वर्क्षनाडीभिर्भक्ता सत्यः लब्धं कलादिका गतिर्भवति। एवमन्येष्वपि पादत्रयेषु ज्ञेयं। अथ त्रिपादगतनक्षत्रत्वात्षष्ट्या ६० खषट् ६० गुणिताः गुण्यसर्वर्क्षनाडीभिर्भक्ताः सत्यं लब्धं कलादिका गतिर्भवति। जाता ३६००० सर्वर्क्षनाडीभि ३२६ र्भक्ता लब्धं कलादिका गतिः ५७।३० एकस्मिन् नक्षत्रपादे त्रयोंऽशा विंशतिः कलाः प्रमाणं ज्ञेयं॥ अथ चन्द्रस्पष्टीकरणं भरणिस्थचंद्रस्य गतघटिकाः ९।४१ सर्वर्क्षघटिकाः ६१।१३ अत्र गतग्रह० १३।२०।० भरण्यादौ गम्यो ग्रहः कृत्तिकादौ ०।२६।४०।० अनयोरन्तरे अंशादि ०।१३।२०।० गतघटीभिः ९।४७ मूत्रिकया गुणितं १३०।३६४० सवर्णितं ७८२६।४ सवर्णितसर्वर्क्षघटीभिः३६७भक्ते लब्धेनांशादिना२।७।५१ गतग्रहो ०।१३।२०।० युतः ०।१५।२७।५इष्टकालिकःस्पष्टश्चंद्रः। अथ गतिः। समग्रनक्षत्रत्वात् ४८००० विकला सर्वर्क्षनाडीभिः ६१।१३भक्ता लब्धं गतिः७८४।६।अथ भौमस्पष्टीकरणम् आर्द्रास्थभौमस्य गतघटिकाः १०७७ सर्वर्क्षनाड्यश्च १२२९

आर्द्रादौ गतखेटः २।६।५० पुनर्वस्वादौ गम्यो ग्रहः २।२०। ०।० उभयोरंशादि ३।२०।०।० गतेष्टनाड्या १०७७ संगुण्य सर्वर्क्षनाड्या १२२९ विभज्य लब्धेनांशादिना १।३४।१२ गतग्रहो २।६।४० युतो जातः स्पष्टो भौमः।२।११८।२१।१२ यत्र गुण्यो गुणकश्च सावयवो भवति तत्र गोमूत्रिकागुणनं कार्यम्। यत्र भाज्यभाजकौ सावयौ स्यातां तत्र सवर्णभागो हार्य इति रीतिः॥ अथ गतिः विकला ४८००० सर्वर्क्षनाड्यः १२२९ भक्ता लब्धं गतिः ३८।५४। अथ बुधस्पष्टीकरणं॥ तत्र बुधो वक्री तेन अष्टम्यां तिथौ घट्यः ६।५४१ चेद्वक्री जातः तेनेष्टघट्यः ५३।६ तदनु वक्रदिनेष्टदिनयोर्मध्ये दिनानि५ तेषां घट्यः३००इष्टघट्यः८।५८एतासां योगो गतेष्टनाड्यः३६२।४ स्वल्पत्वात्पलानि त्याज्यानि।अथ सर्वर्क्षघटीकरणं।वक्रदिनघट्यः५३।०६ततो वक्रदिनादग्रे घट्योघट्यः४५।२९ समये पुनः कृत्तिकायां बुधः आगतः तेनेता एव घट्यः ४५।२९। वक्रदिनमध्ये दिनानि १२ तेषां घट्यः ७२० सर्वासां योगः ८१८।४५ सर्वर्क्षनाड्यः।अथग्रहसाधनं यस्मिन्दिने ग्रहो वक्री जातस्तत्रैदशो ग्रहस्तिथिपत्रे गणितागतः१।१८।५०।२९ वक्रदिनाहं प्रत्यहं विलोमं व्रजन् अग्रे पुनः कृत्तिकायामागतस्तत्रैदशो ग्रहो गम्यः १।१०।०।०। गतगम्ययोरन्तरंशादिः ८।५०।२४गतेष्टनाड्या ३६२ गुणितं पश्चाटाप्य त्रिस्थं फलं ३२००।४।४० षष्ट्या गुणितं अधःकलायुतं १९२००४।४० सवर्णितसर्वर्क्षनाड्या ४९।१२५ भक्तं लब्धेनांशादिना ३।५४। ३० वक्रत्वाद्गतग्रहो १।१८।५०।२४ हीनः १।१४।५५।५४ स्पष्टो बुधः॥अथ गतिः वक्रत्वादंतरांशाः ८५०।२४ षष्ट्या गुणिताः ५३।२४ सवर्ण्य ३१८२४ सवर्णितसर्वनाड्या ४९

१२५ भक्ता लब्धं कलादिगतिर्भवति ३८।५२ ॥ अथ गुरुः गतेष्टनाड्या ९६७५२ अंतरांशाः३।२० गुणिताः ३२२६। १३।२० सर्वर्क्षनाड्या २६३८।२५ भक्ता लब्धेनांशादिना १।१२।३२ गतग्रहो १०।६।४०।० युतः १०।७।५२।३२ स्पष्टो गुरुः॥अथ गतिः यादृगवत्वात्पष्ट्या६०द्विशती २०० गुणिताः १२०० सर्वर्क्षनाड्या २६६८।२५ भक्तं लब्धा गतिः ४।२९।अथ शुक्रः गतेष्टनाड्या १२२९ अंतरांशाः १३२० संगुण्य १६६।२८।४ सर्वर्क्षनाड्या ६४८।४८ भक्ता लब्धेनांशादिना ०।१५।२३ गतग्रहो १।१०।०।० युतः १।१०।१५। २३। अथगतिः ७३।५२॥अथशनिः॥तत्र चैत्रपौर्णमास्यां-घटी ३८।४९ ततः परं मार्गी जातस्तेनैष्यघट्यः २।११।११ तदनु ज्येष्ठवद्यो १३ इष्टघटी ८।५८ मार्गीदिनेष्टदिनयोर्मध्ये दिनानि ४२ तेषां घट्यः ३५२० एतासां योगो गतेष्टघट्यः २५५९ अथ सर्वर्क्षनाडीमार्गीदिने एष्यघटिकाः२।११।११ तदनु लौकिकआषाढवद्यो २ दिने घटी ३०।४३ यावन्मार्गीदिनपूर्णमासी आषाढवद्योद्वितीययोरन्तरे दिनानि६०तेषां घट्यः३६०० मर्षांसां योगः सर्वर्क्षनाड्यः ३६५१।५४। अथ साधनम्। यस्मिन्दिने मार्गी जातस्तभेदशो ग्रहः ३।१६।५८।१९ तिथिपत्रे गणितागतः स्पष्टो गतः॥अग्रे सार्पेरशनिस्तत्रेदशो ग्रहो गम्यः ३।२०।५० अनयोरन्तरांशाः ३।११४१ गतेष्टनाड्या गोमूत्रिकया गुणिताः ७७२१।१९।४५ सवर्णितसर्वर्क्षनाड्या २१ ९२१४ भक्ता लब्धेनांशादिना २।६।५२ गतग्रहो मार्गत्वात् ३।१६।५८।१९ युतः३।१९।५।११स्पष्टः ॥ अंतरांशाः ३।११ ३।१५ षष्ट्या ६० गुणिताः१८३।१९ सर्वर्क्षनाड्यः २१९११

भक्त्वा लब्धं गतिः३।५९।अथ राहुस्पष्टीकरणम् । ज्येष्ठ-वद्यौप्रतिपदि १३।२६ परतः कृत्तिकायां द्वितीयपादे आगतस्तेनैष्यघटिकाः ४६।२४ प्रतिपत्त्रयोदश्योरंतरेदिनानि१२तेषां-घट्यः ७२० इष्टघटी ८।५८ सर्वासां योगः ७७६।२२।अथ सर्वर्क्षनाडीकरणम् पूर्वागतैष्यघटिका ४६।२४ अग्रे श्रावणवदी ५ दिने घटी६।५५ पावत्पादः अनयोरंतरे दिनानि६२ तेषां घट्यः ३७२० सर्वासां योगः सर्वर्क्षनाड्यः३७७३।१९ राहुः सर्वदा वक्री तेन विलोमं व्रजनात् ग्रहः१।३।२०।०गम्यो ग्रहः १०।०।० अनयोरंतरांशाः ३।२०।० गतेष्टनाड्या गुणिताः सर्वर्क्षनाड्या भक्ताः लब्धेनांशादिना विलोमं ०।४१।६ वक्रत्वाद्गतग्रहो १।३।२०।० हीनः स्पष्टो राहुः १।२।३८।५४ गतिः३।११सर्वदा तुल्यएव सषड्भो राहुः केतुर्भवेत्७।२।३८।५४ ग ०३।११ ॥ अथ सर्वेष्टकालिका ग्रहास्तिथिपत्रोपरि कृताः सुगमत्वात्परं करणोपरि कृत्वा वास्तवा ज्ञेयाःगुरुशनिराहवः पादगताः स्पष्टाः कार्याःअन्ये तु एकपादगतादिपादगताः त्रिपादगताः

| सू | च | म | बु | गु | शु | श | रा | के | स्पष्टग्रहा |
|---|---|---|---|---|---|---|---|---|---|
| १ | ० | २ | १ | १० | १ | ३ | १ | ७ | इष्टका |
| ९ | १५ | १८ | १४ | ७ | १० | १९ | २ | २ | लिका |
| २६ | १७ | २१ | ५५ | ५२ | १५ | ५ | ३८ | ३८ | लिखि |
| ४६ | ५१ | ३ | ५४ | ३२ | १३ | ११ | ५४ | ५४ | ताचेति |
| ५७ | ७८४ | ३८ | ३८ | ४ | ७३ | २ | ३ | ३ | गतयः |
| ३० | ६ | ४८ | ५२ | २९ | २ | ५९ | ११ | ११ | |

| लंकोदयफलानि | | | चरखंडाः | | उदयः | | |
|---|---|---|---|---|---|---|---|
| १ | २७८ | मीन | ५५ | हीनः | १ | २२३ | मीन |
| २ | २९९ | कुंभ | ४४ | हीनः | २ | २५५ | कुंभ |
| ३ | ३२३ | मकर | १८ | हीनः | ३ | ३०५ | मकर |
| ४ | ३२३ | धन | १८ | युत | ४ | ३४१ | धन |
| ५ | २९९ | वृश्चिक | ४४ | युतः | ५ | ३४३ | वृश्चिक |
| ६ | २७८ | तुला | ५५ | युतः | ६ | ३२३ | तुला |

समनक्षत्रगताः यथायोग्यं स्पष्टाः कार्या इति विशेषः॥ अथा-यनांशसाधनम् । अथ शराब्धियुगैरिति स्पष्टः। यथा शाकः१५१६शराब्धियुगैर्हीनः ४४५ जातः१०७१षष्ट्या६० भक्तो लब्धमयनांशाः १७।५१ चैत्रान्मासौ २ मतिविकलाः ५ अधिकाः कार्याः तेनात्र १ मासस्तेन विकलाः ५ अधिकाः १७।५१।५ ॥ ४० ॥

सूर्यो वर्षसमुद्भवो न हि भवेज्जन्मार्कतुल्यो यदा त-
द्गत्या विहृतं तयोश्च विवरं लब्धं च हीनान्वितं
वर्षावेशघटीपलेषु सततं वर्षार्कतोल्पाधिके जन्मो-
त्थो द्युमणौ हि वर्षसमयस्त्वेवं भवेत्सुस्फुटः॥४१ ॥

अथ वर्षसमयस्यसंस्कारमाह—सूर्यो वर्षसमुद्भव इति—लब्धं षष्ट्यादिफलं वर्षप्रवेशघटीपलेषु वर्षसूर्य्यात् अल्पाधिके जन्मोत्थे सूर्ये हीनान्वितं कार्यं यथा वर्षसूर्य्याज्जन्मकालीनः सूर्योऽल्पस्तदा हीनमधिकश्चेत्तदा युतं एवं वर्षप्रवेशसमयः स्पष्टो भवति॥ततः तत्कालीना स्पष्टाः कार्याः॥यथा वर्षसूर्यः १।९।२६।५१ जन्मसूर्यो १।९।२६।४६ अनयोरंतरं ०।०।०।५ गत्या ५७।३० सवर्णितया ३४।५० सवर्णितमंतरं ३०० भक्तं लब्धं षष्ट्यादि ०।५ इदं वर्षप्रवेशघटीपलेषु ५।५८ वर्षसूर्य्याज्जन्मसूर्योल्पस्तेन हीनं जातं ८।५३ अस्मात्प्राग्वत्साधितः सूर्यो जन्मसूर्यतुल्यो जातः१।९।२६।४९ गतिः५७।३०। एवं सर्वेऽपि ग्रहाः साध्याः॥ स्वल्पांतरत्वात् दृत्वा वर्षप्रवेशे जन्मसूर्यो नियामक इति ॥ ४१ ॥

लङ्कोदयाः कुंजरशैलदस्रा२७८गोखेटदस्रा२९९
त्रिरदा ३२३ विनाड्यः ॥ हीनाश्चराद्धैः

क्रमतः समेता व्यस्तैर्विलोमा भवनोदयाः षट् ॥४२॥तुलादितः षट् च विलोमतः स्युस्त्रिस्थाक्षभासा निहता क्रमेण॥दिग्भि१०र्गजैः८सत्रिलवा३ग्निभिश्च चराख्यखंडानि पलात्मकानि॥४३॥ अयनलवयुतार्काद्दाहुराशेस्तु संख्या चरसकलयुतिश्चाभुक्तखंडांशघातात् ॥ गगनगुणविभागे३० युक् चरं स्याद्दणं स्वं भवति हि खलु सूर्याद्गोलयोस्तत्पलाद्यम्॥ ४४ ॥

अथलग्नानयनं तदुपयोगिशनिस्वदेशलग्नप्रमाणान्याह ॥ लंकोदया इत्यादि षट् श्लोकाः सुगमाः ॥ उदाहरणम्——मेषादीनां प्रमाणं यंत्रतो ज्ञेयं । चरखंडार्थं शिवपुर्यां अक्षभ्रमा ५।३० त्रिस्था ५।३०।५३०।५।३० यथाक्रमेण दिग्भि१० र्गजैः ८ सत्रिलवाग्निभि ३।२० र्गुणिता ५५।४४।१८ चरखंडानि चरफलार्थं अयनलवा इति ॥ स्थापितः सूर्यः १।९।२६।४६ अयनांशैर्युक्तः १७।५१।५ जातः १।२७।१२।५१ अस्य भुजोपमे च राशिसंख्या १ चरखंडकः ५५ भुक्तं शेषांशेन २७।१७।५१ भोग्यखंडं ४४ गुणितं १२०१ शेषं त्याज्यं त्रिंशद्भक्तं लब्धेन ४० भुक्तचरखंडं ५५ युतं ९५ सायनसूर्योत्तरगोलेन ऋणसंज्ञानि ॥ ४२ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥

युक्ता विहीनाश्चरनाडिकाभिः पंचेंदुनाड्यः १५ क्रमशो भवेताम् ॥ द्युरात्रिखंडे खलु सौम्यगेऽर्के याम्येऽन्यथा ते परिकल्पनीये ॥ ४५ ॥

दिनमानार्थं युक्ता विहीना इति—पंचेंदुनाड्यः १५ द्विधा १५ उत्तरगोलत्वाच्चरघटीभिः १।३५ युक्ता विहीनाश्च जातं दिनार्द्धं १६।३५ रात्र्यर्द्धं १३।२५ दिनमानं ३३।१० रात्रिमानं २६।५० ॥ ४५ ॥

भानोर्भोग्यलवा निजोदयपलैर्निघ्नाः खरामै३० र्हृता स्तद्भोग्यं तपनस्य चेष्टपलतः शोध्यं च शेषात्त्यजेत् ॥ तत्पश्चादुदयात्खराम ३० निहतं शेषं त्वशुद्धोद्धृतं तत्पूर्वैर्भवनैर्युतं क्रियमुखैर्लग्नं च-लांशोनितम ॥ ४६ ॥

अथ लग्नसाधनम्—

भानोर्भोग्यलवा इति—स्थापितः सायनसूर्यः १।२७। १७।५१ अस्यांशादि २७।१७।५१ त्रिंशन्मध्ये शोधितं भोग्यांशादि २।४२।९ उदयपलग्नवृषस्य स्वदेशीयप्रमाणेन २५५ गुणितं ६८९।८।१५ शेषं त्याज्यं उपरि ६८९ त्रिंशद्भक्तं लब्धं २३ इदं सूर्य्यस्य भोग्यं तदिष्टघटीनां ८।५३ पलैर्भाः ५३३ शोधितं ५१० अस्मात्पश्चादुदयादिति मिथुनस्य पलानि ३०५ शोधितानि शेषं २०५ त्रिंशद्गुणं ६१५० अशुद्धेन कर्कप्रमाणेन ३४१ भक्ते लब्धमंशादि १८।२।६ अशुद्धपूर्वमेषादिगणनया मिथुनं तेन युतं ३।१८।२।६ अयनांशैर्हीनं ३।०।११।० स्पष्टलग्नम् ॥ ४६ ॥

स्यादल्पकालो रविभोग्यतस्तु निघ्नः खरामै३० र्निजभोदयाप्तम् ॥ फलं रवेरंशयुतं विलग्नं स्पष्टं च रात्रौ हि सषड्भसूर्यात् ॥ ४७ ॥

अथ भोग्यास्वल्पे इष्टकाले किं कर्तव्यमित्याह—

स्यादल्पकाल इति—कल्पितेष्टपलानि १० रविभोग्यात् २२ न्यूनानि तेनेष्टकालः १०। खरामै ३० गुणितः ३०० उदयपलम्बृषपलै २५५ हृते लब्धेनांशादिना १। १० ३५ सूर्यः १। २७। १७। ५१ युतः। १। २८। २६ अयनांशहीनः १। १७। ३७। ५१ लग्नं। रात्राविष्टकाले सषड्भात्सूर्याल्लग्नं पूर्ववत् साध्यम् ॥ ४७ ॥

अथ ऋणलग्नसाधनम् ॥ भुक्तं व्यस्तविनाडितः परिहरेत्सूर्यस्य भुक्तांशकात् प्राग्राश्युदयांश्च शून्यभुवनै ३० र्निघ्नं त्वशुद्धांशकम् ॥ शेषं भोग्यभशेषतश्चरलवैर्हीनं विलग्नं स्फुटं व्यस्तं तद्दिवसावशेषसमये युक्तात्सषड्भार्कतः ॥ ४८ ॥

अथ ऋणलग्नसाधनम्—

भुक्तं व्यस्तविनाडितः इति—भुक्तांशाद्भोग्यसाधनवत्सूर्यस्य यद्भुक्तमागम्यते तद्व्यस्तविनाडितो विलोमेष्टकालपलतो दिनावशेषपलेभ्यो वा रात्रिशेषपलेभ्यः परिहरेत्। शोधयेत्। शेषात्तत्प्राग्राश्युदयान् त्यजेत्। यस्य राशेर्भुक्तं कृतं तत्पूर्वराशिरदादित्यर्थः। शेषं त्रिंशद्गुणितं अशुद्धराशिपलैर्भक्तं लब्धमंशादि। केवलादंशादिरहिताः तत्सूर्यराशौ अथवा अशुद्धराश्यंशकात् शोधयेत्। अयनांशहीनं ऋणलग्नं स्फुटं स्यात्। यदा दिनावशेषात्तसमयात् पूर्वं लग्नं साध्यते, तदा सषड्भसूर्यात्साध्यं दशमलग्नसाधने दर्शयिष्यामः ॥४८॥

अथ भावसाधनम् ॥ पलार्द्धात्खलु यातकालजनिता नाड्यो विशोध्या नतं पूर्वं स्याद्दिवसार्धतो

गतघटीतुल्यं नतं पश्चिमे ॥ प्राग्भागे क्षणदावशेषघटिकायुक्तं दिनार्धं नतं तस्याम्भुक्तघटीयुतं दिनपलं स्यात्पश्चिमे तद्विदाम् ॥ ४९ ॥

अथ भावसाधनार्थं पूर्वनतादिसाधनमाह—

घस्राद्धांदिति—पातकालजनिता नाड्यः उदयादिभक्ता नाड्यो घस्रार्द्धाद्दिनार्धात्शोध्याः पात्याः। शेषं पूर्वं नतं स्यात्। दिनार्धाद्यावन्तो गता घटीस्तत्तुल्यं नतं पश्चिमे। शेषघटीद्दिनपलयोरंतरमित्यर्थः। क्षणदावशेषघटिकायुतं रात्रिशेषघटीयुतं दिनदलं प्राग्भागे पूर्वं नतं स्यात्। तस्य रात्रेर्भुक्तघटीयुतं दिनदलं पश्चिमे नतं स्यात्। तद्विदां नतज्ञानिनाम्॥४९॥

नतोपरिभावसाधनम् ॥ प्राङ्नप्राहणसंज्ञिकं कथितवलंकोदयैर्यद्भवेत लग्नं तद्दशमाह्वयं क्रमतनुः प्रत्यक्नतात्सांगभम् ॥ वेश्म स्याद्वनितागृहं रसभयुक् लग्नश्च पूर्वामिधं लग्नं चांबुगृहाद्विशोध्य हिबुकं जायाभिधात्सप्तमम् ॥ ५० ॥ आकाशाद्दशमं विलग्नवशतस्त्यक्त्वा गुणांशैस्ततो युक्तानि दिशाराष्ट्रलाभभवनान्येवं ततस्तैर्युतः ॥ रामांशः सहजारिपुण्यभवनादेत्यं क्रमात्साधयेत् संधिः स्यात्खलु भावयोगदलतः स्पष्टो विलग्नादितः ॥ ५१ ॥

अथ दशमलग्नसाधनम्—

प्राङ्नप्राहणइति—यदि प्राक्नतं स्यात्तदा तदेवेष्टकालं प्रकल्प्य सूर्याल्लंकोदयपलैः कथितवत् यल्लग्नं भवेत् तद्-

शमाह्वयं लग्नं ज्ञेयं । यदि पश्चिमनतं तदा नतमेवेष्टकालं प्रकल्प्य लंकोदयपलैः पूर्ववद्यत्क्रमलग्नं तदेव दशमलग्नं । तद्दशमं सांशं ६ भं षड्राशियुक्तं वेश्म चतुर्थं स्यात् । पूर्वाभिधं लग्नं मुख्यलग्नं रसभयुक् षड्राशियुतं वनितागृहं सप्तमो भावः स्यात् । यथा उदयाद्गतघटी ८ । ५३ दिनदल १६ । ५३ योरंतरः ७ । ४२ प्राक् त्रिंशद्युतं २२ । १८ उन्नतं ।

अथ प्राक्नतत्वाद्दशमलग्नसाधनम्—यथा भुक्तव्यस्त इति स्थापितः सायनो रविः १ । २७ । १७ । ५१ । अस्य भुक्तांशाः २० । १७ । ५१ उदयपलैर्लंकोदयस्य वृषस्य पले २९९ गुणिताः ८१६२ त्रिंशद्भक्ताः २७२ । इदं रवेर्भुक्तं पूर्वनतरूपेष्टकालपलेन ४६२ शोधितं १९० अस्माद्विपरीतान लग्नानि शोध्यानि अत्र न शुद्ध्यंति तेन शेषं १९० त्रिंशद्गुणितं ५७०० ॥ अशुद्धमेषप्रमाणेन २७८ भक्ता लब्धमंशादि ॥ २० । ३० । १२ केवलात्सूर्यराशेर्वा अशुद्धलग्नात् १ । ० । ० । १ सपक्षं ९ । ० । ११ । १ इदं सप्तमलग्नं दशमं ११ । २१ । ३८ । ४३ सपक्षजातं चतुर्थं लग्नं ५ । २१ । ३८ । ४३ ॥ अथ भावसाधनम् । लग्नं चांबुगृहादिति—लग्नं अंबुगृहाच्चतुर्थभवनाद्विशोध्य हिबुकं जायाभिधात्सप्तमभावाद्विशोध्य सप्तमं आकाशाद्दशमाद्विशोध्य दशमं विलग्नवशतो लग्नात्यक्त्वा ततश्चतुर्णां शेषाणां गुणांशानां यो तृतीयो भागस्तेन क्रमेण लग्नचतुर्थसप्तदशमभावाः संतो द्वितीयपंचमैकादश भावा भवंति । एतदुक्तं भवति । प्रथमशेषस्य तृतीयभागेन लग्नं युतं द्वितीयोभावः । द्वितीयशेषस्य तृतीयभागेन चतुर्थं युतं पंचमो भावः । तृतीयशेषस्य तृतीयांशेन सप्तमं युतमष्टमो भावः । चतुर्थशेषस्य तृतीयांशेन दशमं युतं । एकादशो भावः । ततस्तैर्द्विशराष्ट २ । ५ । ८

भवनैः स्वस्वरामांशं पूर्वयुतं क्रमेण सहजारिपुण्यभवनानि । अंत्यं च तृतीयषष्ठनवमद्वादशभवनानि साधयेत् । अथवा प्रथमतृतीयांशं लग्नयुतं द्वितीयो भावः। द्वितीयभवनयुतं तृतीयो भावः ततस्तमेव तृतीयांशं द्वि२ राशिच्युतं चतुर्थे युतं पंचमः। पंचमयुतं षष्ठो भाव इतिततः एते षड्राशियुता अपरे क्रमेण षट् भावा भवंति। भावयोमद्दलतः विलग्नादितः स्पष्टः संधिर्भवति। ततः प्रथमद्वितीयभावयोर्योगस्वस्यार्धं प्रथमद्वितीयभावसंधिः। एवमग्रेऽपि द्वादशभावप्रथमभावयोर्योगस्यार्धे द्वादशभावप्रथमभावसंधिः स्यात्। अथ च प्रथमसंधौ तृतीयांशं योज्झिते द्वितीयसंधिः। द्वितीयसंधौ क्षिते तृतीयसंधिः। तृतीयसंधौ एकराशियुते चतुर्थसंधिः। चतुर्थसंधौ द्विच्युतं युतं पञ्चमसंधिः। पञ्चमसंधौ युतं षष्ठसंधिः एते षड्राशियुता अन्ये संधयो भवंति। अथोदाहरणम्-३।०। ११।१चतुर्थभावाः५।२९।२८।४३ षष्ठोपिनं २।२९।२७।४२ चतुर्थे ५।२८।२८।४६ सप्तमभवना ९।०।११।१ षष्ठोधितं शेषं ३।८।२२।१८ सप्तमं ९।०।११।१ दशमभवना ११।२१।३८।४३

अथ भावाः ससंधयः

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | | सं | सं | सं | सं | सं | सं | सं | सं | सं | सं | सं | सं |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ४ | ५ | ६ | ७ | ९ | ९ | १० | ११ | ० | १ | अथ संधयः | २ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | ० | १ | २ |
| ० | २७ | २४ | २९ | २४ | २७ | ० | २५ | २४ | २१ | २४ | २६ | | १३ | १० | ८ | ८ | १० | १३ | १३ | १० | ८ | ८ | १० | १३ |
| ११ | २० | २९ | ३८ | २९ | २० | ११ | २० | २९ | ३८ | २९ | २० | | ४५ | ५४ | ४ | ४ | ५४ | ४५ | ४५ | ५४ | ४ | ४ | १० | ४५ |
| १ | २५ | २९ | ४३ | २९ | १५ | १ | १५ | २९ | ४३ | २९ | १५ | | ३८ | ५७ | ६ | ६ | १२ | ३८ | ३८ | ५७ | ६ | ६ | ५२ | ३८ |

मेषादिद्वादशराशीनां भावाः प्रतिभावस्य संधिश्चात्र लिखिताः। भवांत्याः।

नू २।२१।२७।४३। दशमं ११।२१।३८।४३ लग्नात् ३।०।११।१ शोधितं ३।८।३२।१८ एषां शेषाणां क्रमेण तृतीयो भागः ०।२७।१९।१४ पुनः १।२।५० ४६ प्रथमतृतीयांशं ०।२७।९।१४ लग्ने ३।०।११।१ युतं द्वितीयो भावः ३।१७।१०।१५ द्वितीयतृतीयांशं १।२।५०।४६ चतुर्थे भावे ५।२१।३८।४३ युतं पञ्चमो भावः ६।२४।२९।२९ तृतीयतृतीयांशं ०।२७।९।१४ सप्तमभावे ९।०।११।१ युतमष्टमो भावः ९।२७।२०। १५ चतुर्थतृतीयांशं १। २।५०।४६ दशमभावे ११।२१।३८।४३ युतमेकादशो भावः ०।२४ २९।२९ एवं पुनरपि स्वस्वतृतीयांशं द्विशराष्टलाभभावेषु युतं विपष्ठनवव्ययभावानां भवन्ति। अथ तृतीयांशं ०।२७।९।१४ द्विराशिमध्ये पातितं १।२।५०।४३ चतुर्थभावमध्ये युतं पंचमभावः। पंचमे युतं षष्ठो भावः॥ अथ संधिः। लग्नं ३।०।११।१ द्वितीयभवनं ३।२७।२०।१५ अनयोरैक्यं ६।२७।३८।१६ अस्यार्धं ३।१३।४५।३८ एष तनुधनभावसंधिः। एवमन्येऽन्ये संधयः॥ ५०॥ ५१॥

नतं विनैव दशमभावसाधनम्॥

लग्नाद्रात्रिदलादिलग्नविधिवल्लंकोदयैर्लग्नतो।
लग्नं तत्सुखसंज्ञकं च मदतो यद् घस्रखंडाखभम्॥
साध्यं घस्रदले खभं च गदितं सूर्योऽर्धरात्रे रविः
स्यात्पूर्वोन्नतकालतः क्रमतनुलंकोदयैर्वेधुभम्॥५२॥

अथ नतं विनैव दशमभावसाधनमाह॥

लग्नाद्रात्रिदलादिनि—लग्नं सूर्यं प्रकल्प्य रात्रिदलं साध्यं तदेव रात्रिदलैर्नवेष्टकालं प्रकल्प्य लग्नादिलग्नविधिव-

लंकोदयैर्पंचलग्नं तत्सुखसंज्ञकं चतुर्थं। तत्सभं दशमं। ततोऽन्यो भावविशेषमाह यत्सदले दिनार्धे सूर्य्य एव खभं उक्तं। अर्धरात्रावपि सषड्भो रविरेव खभमित्यर्थः। प्रकारांतरेण चतुर्थभाव साधनम्। स्यात्पूर्वोन्नतइति—पूर्वभागे रविस्तदोन्नतकालतो लंकोदयैर्पंक्रमलग्नं तद्बन्धुसंज्ञं। एतदुक्तं भवति यदा प्राग्नतं भवति तदोन्नतकालमेवेष्टकालं प्रकल्प्य सूर्य्याल्लंकोदयैर्यल्लग्नं तद्बन्धुसंज्ञं। तत्सषड्भं दशममित्यर्थः। लग्नाद्यद्दिनदलं तत्सप्तमभावस्य रात्रिदलं लग्नाद्यद्रात्रिदलं। तत्सप्तमभावस्य दिनार्धं यथा स्थापितं सायनलग्नम्। ३।१८।१।२६। अस्माच्चरखंडैः सूर्य्यरात्रिदलं १३।१४ दिनार्धं १६।४६ लग्नं सूर्यरात्रिदलमिष्टकालं प्रकल्प्य लंकोदयैः क्रमलग्नं साधितं ५।२१।४५।१० इदं चतुर्थं सषड्भं दशमं ११।२८।४५।१० प्रकारांतरत्वात्स्वल्पांतरदोषाय पुनः सप्तमभावः ९।१८।२।२६। अस्माद्दिनदलं १३।१४ सप्तमभवनं सूर्य्यदिनार्धमिष्टकालं प्रकल्प्य पूर्ववल्लग्नं कृतं दशमं ११।२१।४५।१० प्राग्नतत्वादुन्नतकालं २२। १८ इष्टकालं प्रकल्प्य सूर्य्यात् १।२७।१७।५१ लंकोदयैः क्रमलग्नं कृतं ५।२१।४५।१० इदं चतुर्थंसषड्भदशमं ११।२१। ४५।१० ॥ ५२ ॥

खेटे भावसमांशके त्वगदितं पूर्णं फलं भावतो
हीने चेदधिकेऽनुपातवशतो ज्ञेयं बुधैर्भावजम् ॥
संधेर्हीनतराधिका ग्रहकला भावस्वसंध्यंतरैर्भक्ता-
श्चाऽथ विशोपकादिविशदा लब्धे त्रिभिर्भाजिते ॥ ५३ ॥

अथ भावजफलमाह ॥

खेटे भावसमांशके इति—यस्मिन्भावे ग्रहः स्थितस्तद्भावसमांशके तद्भावसदृशे गृहे तद्भावफलं पूर्णं विंशतिविंशोपकारूपं गदितमुक्तं चेद्भावतो हीनेऽधिके वा खेटेऽनुपातवशतः फलं ज्ञेयं। अथानुपातमाह—संधेर्हीनतराइति—संधेः सकाशाद् ग्रहकलाः यावत्यो हीना अधिकाश्च भवंति ता भावस्वसंध्यंतरैर्भक्ता लब्धे त्रिभिर्भक्ते द्विविसदौ ग्रहाणां विंशोपकाः भवंति। एतदुक्तं भवति। ग्रहं स्थाप्य पश्चात्सन्धिः स्थाप्यः। यदा ग्रहो भावतो न्यूनस्तदा तद्भावस्य प्रथमसंधिः स्थाप्यः। यदि ग्रहोऽधिकस्तदा तदग्रसंधिः स्थाप्यः। एतावता भावसंध्योर्मध्ये यथा ग्रहो भवति तथा भावसंधी स्थाप्यौ। ततो ग्रहसंध्यंतरं विकलात्मकेन भावसंध्यंतरेण भाज्यं लब्धमंशादि त्रिभक्तं विंशोपका भवंति। यदा ग्रहो भावतो हीनस्तदा आरोहसंज्ञं फलं ज्ञेयं। यदि ग्रहो भावतोऽधिकस्तदाऽवरोहसंज्ञं फलं भावजं फलं ज्ञेयं। आरोहावरोहसंज्ञकं फलं द्विकलाभ्यधिकं न भवति। स्थापितः सूर्यः ११।१२६।४६ अयमेकादशभावतः ०।२४।२९।२९ अधिकस्तेन द्वितीयसंधिः स्थाप्यः ११।१०।५४।५२ ग्रहः ११।१२६।४६ अनयोरंतरं०।१।१८।६ सवर्णितं ५२८६ भाव ०।२४।२९।२९ संध्यो ११।१०।५४।५२ रंतरेण ०।१६।२५।२३ सवर्णितेन ५९१२३ भक्तं लब्धं ०।५।२९ त्रिभक्तं ०।१।४० इदं भावतो ग्रहस्याधिकत्वादवरोहसंज्ञं। अथ चन्द्रः—०।१५।२७।५१ दशमभावतः ११।२१।३८।४३ प्रथमसंधि ११।८।४।६ द्वितीयसंधि ०।८।४।६ ष्यामधिकस्तेनैकादशभावः। ०।२४।२९।२९ तस्य प्रथमसंधिः ०।८।४।६। ग्रहसंध्योरंतरं ०।७।२३।४५ सवर्णितं २६६२५ भावसंध्यंतरेण ०।१६।२५।२३ सवर्णितेन ५९१

२३ भक्ते लब्धं ०।२७।१ त्रिभक्तं ०।३।० इदं दशमभावस्यारोहसंज्ञं । एकादशभावस्यारोहसंज्ञं । एवं भौमस्याऽपि स्थापना । ग्रहग्रहसंध्यंतरे ०।४।३५।२५। भावसंध्यंतरेण ०।१६।२५।२३ भक्तं लब्धं ०।२।५१ त्रिभक्तं ०।०।५७ द्वादशभावस्यावरोहसंज्ञं । एवमन्येषां ग्रहाणामपि कार्यं । प्रयोजनाभावादत्र न कृतम् ॥ ५३ ॥

आगामिसंधेरधिके फलं स्यादागामि भावोद्भवमन्नसंधेः ॥ हीने च खेटे गतभावजातं पूर्णं फलं भावसमांशकेषु ॥ ५४ ॥ भावाद्ग्रहे स्वल्पतरे स्वसंधेः स्वल्पांशके तद्गतभावजातम् ॥ व्यस्तं तु तद्व्यस्तगते ग्रहाणां ज्ञेयं हि सम्यक् सुधियोधरेण ॥ ५५ ॥ इति भावसाधनम् ॥

अथ भावप्रयोजनमाह आगामिसंधेरिति—तनुसंज्ञके ग्रहे तस्य भावस्य पूर्णं फलं प्रथमसंधेरधिके द्वितीयसंधेर्न्यूने ग्रहे तस्मिन्नेव भावे ग्रहे यथा सूर्यः एकादशभावगः १।५।२६।५१ अयमेकादशभावस्य प्रथमसंधे ०।८।४।६ रधिको द्वितीयसंधे १।१०।५४।५२ हीनः तेनैकादशभावे । एवं ग्रहः चंद्रः ०।१५।२७।५१ दशमभावप्रथमसंधेः १।१।८।४ द्वितीयसंधे ०।८।४ रधिकस्तेनागामिभावे एकादशे भौमः २।१८।२१।३ द्वादशभावस्य प्रथमसंधे २।१३।४५।३८ रभ्यधिको द्वितीयसंधे २।१३।४५।३८ रभ्यधिकस्तेन प्रथमभावेषु बुधगुरुशुक्रास्तस्मिन्नेव भावे शनिः ३।१९।५।११ प्रथमभावस्य प्रथमसंधे २।१३।४५।३८। रभ्यधिको द्वितीयसंधे ३।१३।४५।३८ रभ्यधिकस्तेन द्वितीये ॥ ५४ ॥ आगा-

मिसंधिरित्यस्यैव श्लोकस्यार्थं विशिनष्टि—भावाद्ग्रहे स्वल्पतर इति—स्पष्टः ॥ ५५ ॥

जन्मलग्नम् ।
१२ मं, १ , ११ बृ, १० के, ९, ८, ७, ६, ५, ४ शरा चं, ३, २ शु सू

वर्षलग्नम् ।
४ श, ५, ६, ७, ८ के, ९, १० , ११ बृ, १२ , १ च, २ सू रा बु शु, ३ म

अथ दृष्टिसाधनम् ॥

दृष्टा हीनतनुः खगो यदि भवेद् व्योमाधिको विहृतः षष्टिभ्यः परिशोधितः खचरदृक् रूपाधिकः कूनितः ॥ तद्रागा दलिताश्च वेदरहितो वेदाधिकोर्द्धान्वितो हीनः पंच युगाच्छरर्द्धरहितः पंचाधिको विहृतः ॥५५॥ षड्डोनः षडभाधिकः करहतः षष्ट्या च्युतश्चाधिकः सप्तोनः स्वदलान्वितो गजगुरुष्टो द्विांशोनितः ॥ बाणाब्धेः ४५ शिवतोऽधिको भवविद्युक्त दिग्भः कुलाद्या दृशः स्पष्टाः स्युः खलु वर्षवेशसमये चिन्त्यं दृगुत्थं फलम् ॥ ५६ ॥

अथ दृष्टिसाधनमाह—

दृष्टाहीनतनुरिति—षड्डोन इति—

दृष्टा ग्रहेण दृश्यः खगो भावाच हीनतनुः कार्य्यः। दृष्टा ग्रहेण

दृश्यो हीनः कार्य इत्यर्थः । स यदि व्योमाधिकः शून्याधिकस्तदा तदंशादिः द्विहृतः । द्विगुणं पदेभ्यः शुद्धं खचरदृक्फलायाः एवं दृष्टा हीनो दृश्यो रूपाधिकः एकराशिरधिकस्तदा कृनितः कृनः एकेन हीनः एकराशिहीनः । तद्भागास्तदंशा अद्धिता दृष्टिर्भवेत् । एवं राशिचतुष्टयं यावत्कार्यं दृष्टाहीनतनुर्दृश्यः सर्वत्राध्याहार्य्यः । वेदाधिकश्चतूराशिभ्योऽधिकस्तदा वेदरहितः । तदोनाश्चत्वारो राशयः शोध्याः । शेषांशादि स्वकीयेनार्धेन युतं पंचयुगात्पंचचत्वारिंशद्भ्यो ४५ हीनं यात्यं दृष्टिर्भवति । पंचाधिकस्तदा पंच हेयाः । शेषे द्विगुणं दृग् षड्भाधिकस्तदा षड्राशिभ्यो हेया । शेषं शरहतं द्विहृतः । पञ्चा च्युतो हीनं दृक् । अश्वाधिकः सप्ताधिकस्तदा सप्तोनः सप्त त्याज्याः । शेषं सेनार्द्धेन युतं दृग्गजगुरुरष्टभ्योऽधिकस्तदा व्यष्टोऽष्टौ त्याज्याः । शेषस्यार्धेन ऊनितो बाणाब्धि ४५ तो दृक् । एवमेकादश राशि यावत् । यदि शिवतोऽधिकः एकादशराशितोऽधिकस्तदा एकादश त्याज्याः । शेषं द्विघ्नं कलायाः दृक् भवेत् । एतद् दृष्टिसाधनं ग्रंथकर्त्रा स्वमतिनाऽनुपातेन कृतम् ॥ ५५ ॥ ५६ ॥

पादं त्रिरुद्रे खदलं खतूर्ये पादत्रयं नंदशरे नभोगाः ॥पश्यंति पूर्णं समसप्तमे च फलानि तेषामधुनाऽभिधास्ये ॥ ५७ ॥

अथ सर्वताजिकसम्मतां दृष्टिमाह—पादं त्रिरुद्रइति—पश्यंति पूर्णं समसप्तके च समराशौ एकत्रेत्यर्थः । सप्तमे स्वस्थानात् सप्तमे स्थाने उभयत्रापि पूर्णं विश्वा २० पश्यंति । शेषं सुकरम् ॥ ५७ ॥

एकर्क्षगे स्यात्सवला प्रधाना स्वस्थानतो लाभकरा हि दृष्टिः ॥ मित्रात्तथा भूपतितोऽर्थदात्री सुवस्त्रसौभाग्यकरी नराणाम् ॥ ५८ परस्परं सप्तमगारिभेदं युद्धं विवादं प्रकरोति दृष्टिः ॥ त्रिकोणगा चित्तविलासमुग्रं मित्रात्तथा बंधुजनाच्च सौख्यम् ॥ ५९ ॥ चतुर्थगा मित्रविरोधकष्टं गुप्तारिभेदं प्रकरोति दृष्टिः ॥ त्रिरुद्र३।११गा स्नेहमतिप्रसादं सुखार्थलाभं बलवर्द्धनं च ॥ ६० ॥ क्रूरग्रहाश्चेत् बलदृष्टिसंस्थाः पापेतराः सौम्यदृशिस्थितायाम् ॥ यच्छंति तद्दृष्टिभवं यथोक्तं फलं तदर्थं च विलोमसंस्थाः ॥ ६१ ॥

अथ दृष्टिफलान्याह—एकर्क्षगे इत्यतः—श्लोकाः४सुगमाः अथात्रलग्नं प्रति सर्वेषां दृष्टिसाधनं । दृष्टा रविना ११९।२६ दृश्यं लग्नं ३।०।११।१ हीनं ११२०।४४।१४ रूपाधिकः कुनि-इति वचनादेकेन राशिना ०।२०।४४।१४ एते भागार्द्धिता १०।२२ सा दृष्टिः रवेर्लग्नं प्रति चंद्रेण दृष्टा ०।१५।२७।५१ दृष्टं लग्नं ३।०।११।१ ऊनं २।१४।४३।१०। रूपाधिकत्वादेकोनः १।१४।४३।१० अस्यांशाः ४४।४३ अर्द्धिताः २२।२१ इयं चंद्रदृष्टिः भौमेन दृष्टा ७।१८।२१।३ दृश्यं लग्नं ३।०।११।१ ऊनं ०।१३।४९।५८न्यूनाधिकत्वादंशादि१३।४९द्विगुणं २७।३८ पष्टिभ्यः शुद्धं३२।२२ इयं दृष्टिः बुधेन दृष्टा ११।१४।५५।५८ दृश्यं लग्नं ३।०।११।१ हीनं ३।१५।१५।७ रूपाधिकत्वात्पूर्ववद्दृष्टिः ७।६० गुरुणा १०।७।५२।३२ लग्नमूनं ४।२२।१८।२९ वेदाधिकत्वाद्धीना ०।२२।१८।२९ स्वकीयेनार्द्धेन युता ११।९ जाता ३३।२७ बाणाब्धि ४५ तो हीना

११।३३ दृष्टिः शुक्रेण लग्नमूनं ११।१।५५।३८ प्रागवद्दृष्टिः ९।५७ शनिना लग्नमूनं ११।११।५१।५० शिवतोऽधिकस्तेन भव ११ रहितः ०।११।५१।५० द्विघ्नः २२।१० दृष्टिः एवं लग्नं प्रति सर्वेषां ग्रहणां दृष्टिरानीता । अन्यदृष्टीनामुदाहरणार्थं भौमेन दृष्टः २।१८।२११३ दृश्यषष्ठो भावः ७।२७।२८।११ हीनः ५।८।५९।१८ पंचाधिकस्तेन पंच त्याज्याः ०।८।५९।१८ शेषमंशादि द्विगुणितं १७।५८ दृष्टिः भौमेन दृष्टा सप्तमो भावः ९।०।११।१ हीनः ६।११।४९।४८ षड्भाधिकस्तेन षड्भा ०।११।४९।५८ द्विगुणितं २३।३८ षष्टिः ६० तो हीनं ३६।२२ दृष्टिः भौमेनाष्टमो भावो हीनः ७।८।५९।१२ सप्ताधिकसप्तहीनाः ०।८।५९।१२ स्वार्द्धेन ४।२९ युतमंशादि १३।२८ दृष्टिः कलाद्याः भौमेन नवमो भावो हीनः ८।६।८।२६ गजगुरुत्वाद् व्यष्टः ०।६।८।२६ अस्यार्द्धेन २।४ बाणाधिकः ४५ हीनाः ४१।५६ कलाद्याः भौमेन दशमो भावो हीनः ९।१३।१०।४० गजाद्व्यष्टः ३३।१७ अस्यार्द्धेन १६।३८ बाणाऽधिको हीना २८।३२ दृष्टिः भौमेनैकादशो भावो हीनः १०।६।८।२६ गजगुरुस्तेन व्यष्टः १।६।८।२६ अस्यार्द्धेन ३।३।४ बाणाधिको ४१ हीना ११।५६ दृष्टिः कलाद्या दृष्टिः षष्टिः ६० कलातोऽधिका नायाति । पूर्वदृष्टि प्रकारो शेषः । दृष्टिविशे-

भावकुण्डली.

५ श
३ बु
सू
४
म
२ च
शु
६
७
१
८
१०
१२
९
११ चू

| सर्वसे | चद्रस्य | भावः |
|---|---|---|
| ० | ० | ० |
| ८ | १५ | २४ |
| ४ | २८ | २९ |
| ६ | ५० | २९ |
| म स | पहस | भाव |
| २ | २ | ३ |
| १३ | १८ | ० |
| ४५ | ९० | ११ |
| ३८ | ३ | १ |

विशेपोऽन्यग्रंथात्—एका वामाऽन्या दक्षिणा तृतीया चतुर्थी पंचमी वामा। नवमी दशमी एकादशी दक्षिणा ग्रहापेक्षया। यतो ग्रहाः प्राङ्मुखा व्रजंति भचक्रस्य पश्चिमाभिमुखत्वात्।

लग्नं प्रति ग्रहाणां दृष्टयः स्पष्टाः

| सू | च | म | बु | बृ | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | ० | ० | ० | रूपादि- |
| १० | २२ | ३६ | ३७ | ११ | ९ | १२ | |
| २२ | २१ | २२ | ७ | ३० | ५७ | १७ | दृष्टिः |

उदितमर्द्धं वामा अनुदितमर्द्धं दक्षिणा। उक्तं च—" चक्रार्धंनदले दृष्टिर्ग्रहाणां वामदक्षिणा। ज्ञेया ताभ्यां वले मौढा वामदृष्ट्योस्तु दक्षिणा "। संज्ञातंत्रटीकायामपि-तृतीया वामा एकादशी दक्षिणा ज्ञेया। व्याचक्रस्य वामदृष्टेर्दक्षिणदृष्टिर्वलिनीति॥ आकाशभागभूम्यां उपरि यो ग्रहः पश्यति सा च पातालदृष्टिर्वलिनी दृष्टिरिति ॥५८॥५९॥६०॥६१॥

दृष्टियंत्रं कलात्मकम्

| ३।११ | १०।४ | ५।९ | १।७ |
|---|---|---|---|
| १५ क | ३० क | ४५ क | ६० क |

अथ पंचवर्गीचक्रम् ॥

अथ प्रवक्ष्ये खलु पंचवर्गी चक्रं ग्रहाणां वलसाधनार्थम् ॥ यदीयुतो भावफलानि नूनं ज्ञेयान्यथो खेचरपाकजानि ॥ ६२ ॥ स्वक्षेत्रं निजमुच्चकं च परतो हद्दा त्रिभागस्ततो नंदांशस्त्विति खेचरैर्निगदिता वर्गाः पृथक् पंचधा ॥ खेटस्तेषु गतो भवेद्दलयुतस्त्यक्तस्तु तैर्निर्वलो विज्ञेयो विबुधैस्त्वसौ हि निखिलैर्निर्योऽरिगेहादिगः ॥ ६३ ॥

अथ पंचवर्गीवलप्रयोजनमाह-अथ प्रवक्ष्ये इति-स्पष्टः॥

अथ पंचवर्गीचक्रमिदम्-

| सू | च | म | बु | बृ | शु | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ७<br>३०<br>० | १५<br>०<br>० | ७<br>३०<br>० | १५<br>०<br>० | ७<br>३०<br>० | ३०<br>०<br>० | ७<br>३०<br>० | सू. ३० |
| १६<br>४३<br>४१ | १८<br>३<br>५ | ४<br>१४<br>१९ | ६<br>१९<br>३१ | ३<br>३९<br>१ | १५<br>११<br>३० | ९<br>५३<br>५४ | उ २० |
| ६<br>४५<br>० | ६<br>४५<br>० | १५<br>०<br>० | २<br>३०<br>० | २<br>३०<br>० | २<br>३०<br>० | ५<br>०<br>० | हद्दा १५ |
| २<br>३०<br>० | ५<br>१०<br>० | ११<br>१०<br>० | २<br>३०<br>० | २<br>३०<br>० | २<br>३०<br>० | ५<br>०<br>० | द्रेष्का १० |
| १<br>३०<br>० | २<br>३०<br>० | २<br>३०<br>० | २<br>३०<br>० | ५<br>०<br>० | १<br>१५<br>० | ५<br>०<br>० | नवांशा.५ |
| ३२<br>५८<br>५१ | ५४<br>१८<br>४ | २९<br>२४<br>१९ | ३०<br>२४<br>३२ | ११<br>२४<br>१ | ५६<br>२७<br>३७ | २१<br>८<br>५४ | योग. |

पंचानां वर्गाणां समाहरः पंचवर्गी ॥ ६२ ॥ स्वशब्दः प्रत्येकं संबध्यते स्वराशौ १ स्वोचे २ स्वहद्दायां स्वत्रिंशे ३ स्वमित्रभागे स्वद्रेष्काणे ४ स्वनंदांशे स्वनवांशे ५ स्थितो ग्रहो वलिष्ठः अन्यथा निर्बलः॥ तत्रापि पंचस्वेपु पूर्णबलः त्रिपु मध्यबलः मित्रादिष्वपि मध्यबलः। अरिगृहादिगो निन्द्यः इति। शेषं स्पष्टम् । स्वगृहोच्चत्रिंशांशवैराशिकनवांशकगवानां प्राक् २ स्थाने प्रबलवान् यथोत्तरस्थानगो हीनः ॥ ६३ ॥

भवनपाः क्रियतः कुजभार्गवज्ञविधुसूर्यशशांकजभार्गवाः ॥ कुजसुरेज्ययमार्कजमंत्रिणः खलु भवंति ततो लवपा इमे ॥ ६४ ॥ स्वोच्चं घस्रपतेरजो दशलवैश्चंद्रस्य रामैर्वृषो भौमस्याष्टयमै २८ र्मृगस्तिथि १५ लवैः सौम्यस्य कन्यागृहम् ॥

बाणैः ५ कर्कगृहं गुरोर्नवयमैः शुक्रस्य प्रोक्तं
झषः २७ मंदस्याग्रयमै २० लवैर्निगदितं स्वोच्चं
तुलासंज्ञकम् ॥६५॥ उच्चान्नीचपदं भवेन्नगगृहं
मूलत्रिकोणं रवेः सिंहो शून्ययमै २० वृषो हिमरु-
चेर्भौमस्य मेषो नखैः॥ कन्याभं खयमैर्बुधे सुरगुरो-
र्भागैर्नखैश्चापभं दैत्येज्यस्य तुला खनेत्रलवकैर्मं-
दस्य कुंभो नखैः॥ ६६॥ अथ हद्देशाः ॥ तर्कांगे-
भशरैषवः प्रथमभे हद्दांशकाः कार्मुके स्युः सूर्ये १२
पु ५ युगे ४ पु ५ सागरमिता ४ स्तेषामशीशाः
क्रमात्॥वागीशस्फुजिदिंदुदेहजकुजाः सौरिस्तथा
तीस्मभे पद् ६ तर्के ६पु ५ नग ७त्तंव ६श्च रस६
भेऽगाश्वा. १० श्च सप्ता ७ श्विनौ २ ॥ ६७ ॥
विद्दैत्येज्यसुरेज्यमंगलयमास्त्रिंशांशपाश्चाब्धिभे स-
प्तां ७ गर्तु ६ नगा ७ब्धय ४ श्च वसुभे सप्ता ७
ब्धि ४ सर्पे ८ पु ५ पट् ॥ माहेयास्फुजिदिंदुजे-
ज्यशनयो गोभे लवाः संमताः सर्पा८ गा ६ ष्ट८
शरा ५ ग्नयो ३ थ सितविज्जीवार्कजारेश्वराः
॥ ६८ कुंभे सप्त ७ रसा ६ द्रि ७ मार्गण ५
शराः५सौम्यस्फुजिद्देवराट् पूज्यारार्कसुता घटे-
रस ६ गजाः ८ सप्ता ७ द्रि ७ दस्रा २ लवाः ॥
नाथा मंदबुधेज्यशुक्रकुसुता हद्दांशकः सिंहभे तर्के
६ ष्वद्रि ७ पडर्चवो ६ गुरुसितौ मंदज्ञभौमा मृगैः

॥ ६९ ॥ सप्ता ७ गा ७ ष्ट ८ युगा ४ ऽघयः ४
स्त्वथ छवा ह्येज्यस्फुजिद्भास्करी क्षोणीज्यास्ति-
भिभे पतंग १२ निगमास्त्र्यं ३ का ९ श्विना २-
वीश्वराः ॥ शुक्रेज्यैंदुजभौमसूर्यतनया हद्देश्वरा
स्युस्तु ते हद्दास्ताजिकसंमता निगदितास्त्रिंशां-
शकाः सूरिभिः ॥ ७० ॥ अथ नवांशकाः—मेषा-
द्या क्रियचापकुंभरिपवः कर्कालिमीनास्तु यः
कर्काद्यास्त्वथ कुंभयुग्मवणिजाः प्रोक्तास्तुला
पूर्वकाः॥ गोकन्यामकरा मृगादय इमे नंदांशकाः
संमता ब्रह्मांशाः क्रमशः कुजार्कभृगुजाः सौम्यें-
दुसूर्यात्मकाः ॥७१ ॥ नाकेशार्चितभौमतिग्मरु-
चयः ३ शुक्रशराशीश्वरा ४ मंदेज्यक्षितिजा ५
रविर्भृगुबुधौ ६ राशीशमंद्ज्यकाः ७ भौमार्कौ भृ-
गुजो ८ बुधेंदुरविजाः ९ जीवारघस्रेश्वराः १०
दैत्येज्येंदुजरात्रिपा ११ यमगुरुक्षोणीजका १२
मेषतः ॥ ७२ ॥

भवनपा इत्यादयः नाकेशार्चित-इत्यंताः श्लोकाः सु-
गमाः॥ बुधस्य मूलत्रिकोणविषये कन्यार्भं सपचैबुंधे इति उच्चांश-

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| म | बु | बृ | शु | श | सू | च | मं | बु | बृ | शु | श |
| सू | च | मं | बु | बृ | शु | श | सू | चं | म | बु | बृ |
| शु | श | सू | च | म | बु | बृ | शु | श | सू | च | म |

१५ युतानां विंशत्यंशानां ग्रहणार्थं सा-मान्यतः कृतं । तेन पंचां-

शेऽपः परं पंचांशान् यावत् मूलत्रिकोणं ततदंशांशान् स्वक्षेत्रं । उक्तं च–"तुंगांशकेभ्यः शरतुल्यभागा मूलत्रिकोणभवनं परतः स्ववेश्म " इति । शेपं सुगमम् ॥ ६४ ॥ ६५ ॥

रव्यादीना नीचा-

| सू | च | म | ब | बृ | शु | श | ग्र |
|---|---|---|---|---|---|---|---|
| ६ | ७ | ३ | ११ | ९ | ५ | ० | रा |
| १० | ३ | २८ | १५ | ५ | २७ | २० | अं |

॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

अथ हद्दाचक्रमिदम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ १ बृ | ८ शु | ६ बु | ७ मं | ६ बृ | ७ बु | ६ श | ७ म | १२ बृ | २ बृ | ७ बु | १२ शु |
| ६ १२ शु | ६ १४ बु | ६ १२ शु | ६ १३ शु | ५ ११ शु | १० शु | ८ बु | ४ शु | ५ शु | ७ बृ | ६ शु | ४ बृ |
| ८ २० बु | ८ २२ बृ | ८ २० बृ | ६ १९ बु | ७ १८ श | ४ बृ | ७ बृ | ८ बृ | [illegible] बु | ८ शु | ७ बृ | ३ बु |
| ५ २५ म | ५ २७ म | ७ २७ म | ७ २५ बृ | ६ बु | ७ म | ७ शु | ५ बृ | ५ म | ४ श | ५ म | ९ म |
| ५ ३० श | ३ ३० श | ६ श | ४ ३० श | ६ म | २ श | २ मं | ६ श | ४ श | ४ मं | ५ श | २ श |

अथ मित्राण्याह ॥

मित्राण्यारशशांकशक्रसचिवा भौमार्कदेवार्चि-
ता जीवार्कक्षणदाधिपाः ४ शनिसितौ चंद्र (

॥ ६९ ॥ सप्ता ७ गा ७ ष्ट ८ युगा ४ ऽघयः ४ स्त्वथ उचा होज्यस्फुजिद्भास्करी क्षोणीज्यास्ति-भिभे पतंग १२ निगमास्त्र्यं ३ का ९ श्विना २-वीश्वराः ॥ शुक्रेज्येंदुजभौमसूर्यतनया हद्देश्वरा स्युस्तु ते हद्दास्ताजिकसंमता निगदितास्त्रिंशां-शकाः सूरिभिः ॥ ७० ॥ अथ नवांशकाः—मेषा-द्या क्रियचापकुंभरिपवः कर्कालिमीनास्तु यः कर्काद्यास्त्वथ कुंभयुग्मवणिजाः मोक्तास्तुला पूर्वकाः॥ गोकन्यामकरा मृगादय इमे नंदांशकाः संमता ग्रहांशाः क्रमशः कुजार्कभृगुजाः सौम्यें-दुसूर्यात्मकाः ॥ ७१ ॥ नाकेशार्चितभौमतिग्मरु-चयः ३ शुक्रशशीश्वरा ४ मंदेज्यक्षितिजा ५ रविर्भृगुबुधौ ६ राशीशमंदेज्यकाः ७ भौमार्कौ भृ-गुजो ८ बुधेंदुरविजाः ९ जीवारघस्रेश्वराः १० दैत्येज्येंदुजरात्रिपा ११ यमगुरुक्षोणीजका १२ मेषतः ॥ ७२ ॥

भवनपा इत्यादयः नाकेशार्चित इत्यंताः श्लोकाः सु-गमाः बुधस्य मूलत्रिकोणविषये कन्यार्धं स्वपर्यैवंधे इति उच्चांश-

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| म | बु | बृ | शु | श | सू | च | म | बु | बृ | शु | श |
| सू | च | म | बु | बृ | शु | श | सू | च | म | बु | बृ |
| शु | श | सू | च | म | बु | बृ | शु | श | सू | च | मं |

१५ युतानां त्रिंशत्पंशानां ग्रहाणां मा-न्यतः इतं । तेन पंचां-

शेभ्यः परं पंचांशान् यावत् मूलत्रिकोणं तत्तदंशांशान् स्वक्षेत्रं ।

रव्यादीनां नीचा.

| सू | च | म | ब | बृ | शु | श | ग्र |
|---|---|---|---|---|---|---|---|
| ६ | ७ | ३ | ११ | ९ | ५ | ० | रा |
| १० | ३ | २८ | १५ | ५ | २७ | २० | अं. |

उक्तं च—"तुंगांशकेभ्यःशरतुल्यभागा मूलत्रिकोणभवनं परतः स्ववेश्म " इति । शेषं सुगमम् ॥ ६४ ॥ ६५ ॥ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

अथ हद्दाचक्रमिदम् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ १ बृ | ८ शु | ६ बु | ७ मं | ६ बृ | ७ बु | ६ श | ७ मं | १२ बृ | २ बृ | ७ बु | १२ शु |
| ६ १२ शु | ६ १४ बु | ६ १२ शु | ६ १३ शु | ५ ११ शु | १० शु | ८ बु | ४ शु | ५ शु | ७ बृ | ६ शु | ४ बृ |
| ८ २० बु | ८ २२ बृ | ८ २० बृ | ६ १९ बु | ७ १८ श | ४ बृ | ७ बृ | ८ बृ | ४ बु | ८ शु | ७ बृ | ३ बु |
| ५ २५ म | ५ २७ म | ७ २७ म | ७ २५ बृ | ६ बु | ७ म | ७ शु | ५ बृ | ५ मं | ४ श | ५ म | ९ मं |
| ५ ३० श | ३ ३० श | ६ श | ४ ३० श | ६ मं | २ श | २ मं | ६ श | ४ श | ४ मं | ५ श | २ श |

अथ मित्राण्याह ॥

मित्राण्यारशशांकशक्रसचिवा भौमार्कदेवार्चिता जीवार्कक्षणदाधिपाः ४ शनिसितौ चंद्रार्क-

भूनंदनाः ॥ सौम्यादित्यभवौ शशांकजसितौ मंदज्ञशुक्रा इमे सूर्यात् स्यू रिपवस्तु ताजिकमते शेषा बुधैश्चोदिताः ॥ ७३ ॥

अथ मित्राणि ॥

अथ मित्राण्याह—मित्राण्यारशशांक इति—ताजिकमते ग्रहाणां मित्रशत्रू उक्तौ येन सूर्यात् स्युरिति सूर्यादीनां पर्यंतानां आरशशांकइत्यादीनि मित्राणि शेषाः शत्रवः यथा रवेः भौमचंद्रगुरवो मित्राणि । शेषाः बुधशुक्रशनयः शत्रवः । एवं सर्वेषां यंत्रतो ज्ञेयम् ॥ ७३ ॥

परस्परमित्रशत्रुचक्रम्

| सू | च | म | बु | गु | शु | श | रा | ग्रहाः |
|---|---|---|---|---|---|---|---|---|
| च गु मं | सू मं बु | सू च बु | शु श | सू चं मं | बु श | बु शु | बु शु श | मित्र० ग्रहाः |
| बु शु | बु शु | बु शु | सू चं | बु शु | सू च | सू च | सू चं | श० |
| श | श | श | मं गु | श | मं गु | मं गु | मं गु | प० |

त्रिंशांशा निजभे ३० स्वमित्रभवने पक्षांशकाः १५ शत्रुभे सार्द्धाः सप्तलवा ७।३० सुस्वामिलवगे भागास्तु पंचेन्दवः १५ ॥ त्रिंशांशा निजमित्रगे नगलवा सार्द्धाः ७।३० कृताः शत्रुगे पादोना ३।४५ सगुणांशके दश लवा १० बाणांशका ५ मित्रगे ॥ ७४ ॥ द्रेष्काणे सदला यमा २।३० स्वरिगवे नंदांशके स्वे शराः ५ नंदांशे निजमित्रगे यमलवा सार्द्धौ २।३० स्वरौ तद्-

लम्१।१५॥ खेटे नीचविवर्जिते षडधिके चक्रा-१२ त्यजेत्तल्लवा भक्ता नंद ९ मितैर्लवादि-खचरैः प्रोक्तं बलं तुंगजे ॥ ७५ ॥ युक्ते खेटब-लेन पुष्करगते स्पष्टं बलं स्याद् ध्रुवं वेदा ४ सं च विशोपकास्त्विति तदा वीर्योद्भवा ल-ब्धयः ॥ बाणे ५ नष्टबलो ग्रहो दश १० मितै-र्मध्यो विशोपैस्ततः श्रेष्ठो पक्ष १५ मितैः सुखा-र्थजनकः प्रोक्तः सदस्रे २० भंजेत् ॥ ७६ ॥ इति बलाध्यायः ॥

अथ पंचवर्गीबलमाह–त्रिंशाशा निजभे इति–त्रिंशां-शाः निजराशौ स्थिते ग्रहे त्रिंशांशा ३० बलं स्वमित्रस्य भवने पक्षांशाः १५ पंचदश भागाः बलं शत्रुराशौ ग्रहे सार्द्धा सप्त ७।३० अंशा इति स्वगृहबलं । अथोच्चबलं वक्ष्यति । सुखा-मिलवगे स्वत्रिंशे गृहे पंचेंदवः पंचदश भागाः १५ मित्रगे त्रिं-शांशे सार्द्धनग ७।३० लवाः । शत्रुगे पादौ ३।४५ कृतं ३ धारः स्वगुणांशके स्वद्रेष्काणे दशे १० लवाः मित्रगे बाणांशकाः ५। ॥ ७४ ॥ द्रेष्काणे सदलेति–अरिगे द्रेष्काणे सदला यमाः २।३०। स्वनंदांशे स्वनवांशके ग्रहे शराः ५। मित्रगे सार्द्धयमलवाः २।३० अरौ तद्दलम् १।१५। अथो-दाहरणमाह–यथा रविः १।१५।२६।४६ वृषराशौ स्थितः तस्य पतिः शुक्रः सः सूर्यस्य शत्रुत्वेन शत्रुराशौ उच्चबलं ७।३० लिखितं यंत्रतो ज्ञेयं इदं स्वगृहबलं। अथोच्चबलम् । खेटे नी-चविवर्जित इति–रविः १।१५।२६।४६ नीचेन ६।१०।०।०

**चतुर्भक्तविश्वात्मकपञ्चवर्गचक्रम् ।**

| सू | च | म | बु | वृ | शु | श |
|---|---|---|---|---|---|---|
| ८<br>१८<br>४० | ११<br>४२<br>० | ९<br>५१<br>११ | ७<br>४६<br>८ | ५<br>३६<br>३९ | १४<br>६<br>२९ | ७<br>४०<br>१२ |
| मध्यम | श्रेष्ठ | मध्यम | मध्यम | मध्यम | श्रेष्ठ | मध्यम |

हीनः ६।२९।२६।४६ षडधिकत्वात् द्वादशमध्ये पात्यः ५। ०।३३।१४ अस्यांशाः १५०।३३।१४ नंदे ९ भक्तं लब्धं १६।४३।४१ उच्चबलं। अथ हद्दाबलम्॥ रविर्वृषराशौ दिङ्मिते त्रिंशे स्थितः तस्य हद्दाकोष्ठकाज्जातः पतिर्बुधः स सूर्यस्य शत्रुस्तेन शत्रुसत्कहद्दाबलं ३।४५। अथ द्रेष्काणबलम् रविर्वृषराशौ प्रथम द्रेष्काणे द्रेष्काणकोष्ठकाज्जातस्तस्य पतिर्बुधः स शत्रुः सूर्यस्य तेन शत्रुसंबंधी द्रेष्काणबलम् २।३० ॥ अथ नवांशबलम्। वृषस्य तृतीये नवांशे रविमंकराद्गणने तस्य पतिर्गुरुः सूर्यस्य मित्रं तेन मित्रोक्तं नवांश २।३० युक्तं खेटबलेन ग्रहबलेन स्वगृहादिकेन उच्चबलं युक्तं पुष्करगते ४ ग्रहस्पष्टबलं स्यात्। शेषं सुगमं। यथा रवेः स्वगृहादिबलानां पंचानामैक्यं ३२।५८।४१ चतुर्भक्तं विश्वा ८।१४।४० एवं सर्वेषां ग्रहाणां कार्य्यम् ॥ ७५ ॥ ७६ ॥

**पंचवर्गीबलम्.**

| स्व | मि | श | ग्रहा. |
|---|---|---|---|
| ३०<br>० | १५<br>० | ७<br>३० | स्वगृह |
| १५<br>० | ७<br>३० | ३<br>४५ | हद्दा |
| १०<br>० | ५<br>० | २<br>३० | द्रेष्का |
| ५<br>० | २<br>३० | १<br>१५ | नवां |

## अथ द्वादशवर्गी चक्रम् ॥

अथोच्यते द्वादशवर्गिचक्रं प्रोक्तं खगानां चल-

साधनार्थम् ॥ यदीयैतः खेचरभावजोत्थं पष्ठं प्रवीणैः सदसत्फलं च ॥ ७७ ॥ भंभाद्धो त्रिलवश्च वेदलवको ४ बाणांशका पट् लवः सप्तांशाष्टलवस्ततो नवलवो दिक्रुद्रसूर्यांशकाः ॥ एवं द्वादशवर्गिका निगदिता राशीश्वराश्चोक्तवत् सूर्य्येन्दोर्विषमे गृहे समगृहे होरे शशांकार्कयोः ॥ ७८ ॥ आद्ये त्रिभागे भवनाधिपः स्यात्पतिस्ततः पंचमपो द्वितीये ॥ प्रोक्तस्तृतीये नवमाधिनाथो वेदां ४ शकानां पतयस्तु केंद्रात् ॥ ॥ ७९. ॥ पंचांशनाथाः कुजमंदजीवज्ञभार्गवाः स्युर्विषमे च युग्मे ॥ व्यस्ताश्च ते युग्मगृहे तुलाद्याः पष्ठांशपास्त्वोजगृहे क्रियाद्याः ॥ ८० ॥ सप्तांशपास्त्वोजगृहे स्वगेहा युग्मे ततो द्यूनगृहाद्भजांशाः ॥ शीर्षेष्वजाद्याः स्थिरभेषु चापात् युग्मेषु सिंहात्कथिता ग्रहज्ञैः ॥ ८२ ॥ मेषात् घटाच्चापभृतो तुलाच्च सिंहात्त्रिभाद्दिग्लपा हि पष्ठां ॥ भागं घटात् पूर्ववदत्र चक्रे रुद्रांशकानामधिपान् प्रवच्मि ॥ ८२ ॥ मेषाज्झपात्कुंभभृतो मृगाच्च चापाद्वजात्सक्षमतो रसाच्च ॥ सिंहाच्चतुर्थान् मिथुनात् वृषाच्च स्युर्द्वादशांशान्निजभाद्विचिंत्याः ॥ ८३ ॥

अथ द्वादशवर्गीचक्रं लिख्यते—अथोच्यते द्वादशवर्गिचक्रमिति—द्वादशानां वर्गाणां समाहारो द्वादशवर्गी

अथ द्वादशवर्गीचक्रमिदम्.

| सू | च | म | बु | बृ | शु | श | महा |
|---|---|---|---|---|---|---|---|
| २ शु | १ म | ३ बु | २ शु | ११ श | २ शु | ४ चं | गृहा. १ |
| १ सू | २ च | २ च | १२ चं | १ सू | १ चं | २ सू | होरा २ |
| ८ सू | २ सू | २ शु | २ बु | १ श | २ बु | २ म | द्रेष्का० ३ |
| २ सू | ३ शु | ३ बृ | २ सू | २ शु | २ सू | ३ श | चतु० ४ |
| २ बु | ३ बृ | ४ शु | ३ बु | २ श | २ शु | ४ श | पंच० ५ |
| २ मं | ४ चं | ४ च | २ बु | २ शु | ३ बृ | ४ श | षष्ठा० ६ |
| ३ श | ४ च | ५ शु | ४ श | २ बृ | ३ श | ५ शु | स० ७ |
| ३ श | ५ सू | ५ बृ | ४ बु | ३ श | ३ श | ६ बु | अ० ८ |
| ३ बृ | ५ सू | ६ बृ | ५ शु | ३ बृ | ४ म | ६ बृ | नव० ९ |
| ४ शु | ६ बु | २ बु | ५ बु | ३ शु | ४ शु | २ मं | दश०१० |
| ४ सू | २ शु | ७ सू | ६ सू | ३ सू | ४ बृ | ८ सू | एका०११ |
| ४ सू | २ शु | ८ श | ६ शु | ४ शु | ५ बु | ८ श | द्वा० १२ |

गृहम् १, होरा २, द्रेष्काणम् ३, चतुर्थांशः४, पंचमांशः ५, षष्ठांशः ६, सप्तमांशः ७, अष्टमांशः ८, नवमांशः ९, दशांशः १०, एकादशांशः ११, द्वादशांशः १२, इति नामानि । अथ प्रमाणानि गृहप्रमाणांशाः ३० होराप्रमाणं १५ इत्यादि प्रमाणं यंत्राज्ज्ञेयं । अथैषां स्वामिनः गृहेश्वराः पूर्वमुक्ताः। विषमराशिस्थिते ग्रहे भावे वा प्रथमहोरास्वामी रविर्द्वितीयहोरास्वामी चंद्रः । समराशौ प्रथमांशः १५ । यावत् होरास्वामी चंद्रः । द्वितीयहोरास्वामी रविः । अथ द्रेष्काणं । प्रथमद्रेष्काण-

अथ द्वादशांशप्रमाणानि लि० ।

| गृ | हो | द्रे | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | १५ | १० | ७ | ६ | ५ | ४ १७ | ३ | ३ | ३ | २ ४३ | २ |
| ० | ० | ० | ३० | ० | ० | ८ | ४५ | २० | ० | ३८ | ३० |
| ० | ० | ० | ० | ० | ० | ३४ | ० | | ० | १० | ० |

स्वामी ग्रहाधिष्ठितराशिस्वाम्येव । द्वितीयद्रेष्काणस्वामी अधिष्ठितराशेः सकाशात् पञ्चमभवनाधिपः । तृतीयद्रेष्काणास्वामी नवमाधिपः । अथ प्रथमचतुर्थांशस्वामी राश्यधिपः । द्वितीयचतुर्थांशस्वामी ग्रहाधिष्ठितराशेश्चतुर्थो यो राशिस्तस्य स्वामी । तृतीयचतुर्थांशस्वामी ग्रहाधिष्ठितराशेर्यः सप्तमस्तस्य स्वामी । चतुर्थचतुर्थांशस्वामी ग्रहाधिष्ठितराशेर्यो दशमो राशिस्तस्य स्वामी । उक्तं च—" एकद्वित्रिचतुर्थेषु लग्नपादेषु च क्रमात् ॥ स्वस्वराश्यादिकेंद्रेशाः पादांशा नायका मताः "

| पंचमांशस्वामीयंयंत्रम् | | | | | |
|---|---|---|---|---|---|
| विषम | ६ म | १२ श | १८ बृ | २४ बु | ३० शु |
| सम | ६ शु | १२ बु | १८ बृ | २४ श | ३० म |

१पंचमांशस्वामिनः यंत्रात् ज्ञेयाः।षष्ठांशनाथा विषमराशौ स्थिते ग्रहे भावैक्ये मेषाद् गणनीयाः। समराशौ ग्रहे तुलातो गण्याः । सप्तमांशनाथा विषमराशौ ग्रहे ग्रहाधिष्ठितराशितो गण्याः । समराशौ ग्रहाधिष्ठितराशेर्यः सप्तमो राशिस्तस्माद् गण्याः। अष्टांशनाथाः चरराशितो स्थिते ग्रहे भावे वा मेषतो गण्याः। स्थिरराशौ चराद्याः । द्विःस्वभावे सिंहाद्याः । नवांशवल्पाः प्रागुक्ताः । दशांशनाथा मेषराशौ वृषराशौ मेषाद्याः । वृषराशौ कुंभाद्याः । मिथुनराशौ धनुर्द्धराद्याः। कर्कराशौ तुलाद्याः । सिंहराशौ सिंहाद् गण्याः। कन्याराशौ मिथुनाद् गण्याः । तुलातोऽप्यनेनैवप्रकारेण । यथा तुलाराशौ मेषाद्या वृश्चिकराशेर्घटाद्या धनराशौ धनुराद्याः । मकरराशौ तुलाद्याः कुंभराशौ सिंहाद्याः । मीनराशौ मिथुनाद्याः । अलिकुंभधनुरित्ययं श्लोकः पाठान्तरं क्षेपको वा । अथैकादशांशनाथाः । मेषराशौ मेषाद्याः वृषराशौ मीनाद्याः मिथुनराशौ कुम्भाद्याः कर्के मृगाद्याः । अथ द्वादशांशस्वामी स्वगृहाद् ग्रहाधिष्ठितराशेर्गण्यः । एवं यो ग्रहो भावो वा यस्मिन् राशौ

भवति तस्माद् गणने योऽधिपः आयाति स स्वामी ज्ञेयः। यथा सूर्यः १।९।२६।६६। गृहे वृषस्तस्य स्वामी वृषस्तस्य स्वामी शुक्रः। समराशौ होरा प्रथमा। तस्याः स्वामी चंद्रः। द्रेष्काणः प्रथमः। तेन वृषराशेः स्वामी शुक्रः २। चतुर्थांशे द्वितीयस्तेन ग्रहाधिष्ठितवृषराशेश्चतुर्थराशिस्वामी सूर्यः स चतुर्थांशस्वामी सूर्यः ४। पंचमांशो द्वितीयः। समराशौ ग्रहस्तेन द्वितीयपंचमांशस्वामी बुधः ५। षष्ठांशो द्वितीयः। समराशितो गणने द्वितीयषष्ठांशस्वामी भौमः ६। सप्तमांशस्तृतीयसमराशित्वात्। ग्रहाधिष्ठितवृषराशेः समराशिः वृश्चिकराशितो गणने तृतीयस्वामी शनिः। अष्टमांशस्तृतीयः स्थिरराशित्वाद्धनुराशितो गणिते तृतीयांशस्वामी शनिः ८। नवांशस्तृतीयः वृषराशौ स्थिरत्वान्मकरतो गणिते तृतीयनवांशस्वामी गुरुः ९। दशांशचतुर्थवृषराशौ स्थिरत्वात्कुंभतो गणितो चतुर्थदशांशस्वामी शुक्रः १०। एकादशांशश्चतुर्थः। वृषराशौ स्थिरत्वान्मीनतो गणिते चतुर्थैकादशांशस्वामी बुधः ११। चतुर्थो द्वादशांशः। स्वगृहादिति वृषराशितो गणिते चतुर्थद्वादशांशस्वामी सूर्यः। एवं रवेर्द्वादशवर्गी। एवं सर्वेषां ग्रहाणां द्वादशांशवर्गी पंचतो ज्ञेया ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥

मित्रोच्चसौम्यग्रहजास्तु धन्या निंद्यास्तु नीचारिखलोद्भवाश्च ॥ एवं ग्रहाणां शुभपापजातं वैयंतरायाद्यधिकं विलोक्यम् ॥ ८४ ॥ शुभा च शेषे खचरो बलिष्ठः स्यान्निर्बलो दुष्टफलावशेषात् ॥ वीर्यानुसारात्खलु भावजातं ज्ञेयं फलं वा ग्रहजं दशायाम् ॥ ८५ ॥

अथ द्वादशवर्गाणां विवेचनमाह—मित्रोच्चसौम्यग्रहजा इति—यस्य ग्रहस्य द्वादशवर्गा यावंतो मित्रोच्चसौम्यग्रहजा वर्गास्तावंतो धन्याः शुभाः । एतदुक्तं भवति । मित्रग्रहस्य वर्गः उच्चग्रहस्य वर्गः । सौम्यग्रहस्य वर्गः । एते धन्याः । नीचारिखलोद्भवा वर्गाः निंद्याः । नीचस्थग्रहस्य वर्गः शत्रुग्रहस्य वर्गः क्रूरग्रहस्य वर्गः एतेऽशुभाः । अथ बलमाह—एवं ग्रहाणामिति—एवं शुभपापरूपद्वयस्यांतरं कार्यं यदधिकं तद् विलोक्यम् । शुभाधिके ग्रहो बलिष्ठः । क्रूराधिके निर्बलः । उक्तं च वामनताजिके—"सूर्यादिसर्वखेटानां वीक्ष्य द्वादशवर्गिकाः ॥ शुभाः स्वभावसौम्योच्चा निंद्या नीचारिपापजाः ॥ १ ॥ एवं फलद्वयं वीक्ष्य तद्विशोध्य परस्परम् ॥ यच्छेषं तत्फलं ज्ञेयं ग्रहे द्वादशवर्गजम् ॥२॥ वर्गे शुभाधिके क्रूरः शुभः सौम्येऽतिशोभनः ॥ निंद्याधिके शुभः क्रूरः क्रूरोऽतिक्रूरतां व्रजेत्" ॥ ॥ ३ ॥ शेषं सुगमम् ॥ अथ द्वादशवर्गीफलं ग्रंथांतरात् "शुभाशुभं समं वेश्म बलमाने फलं वदेत् ॥ शुभाधिके फलं पूर्णं सुखसम्पत्तिसौख्यदम् ॥ १ ॥ क्रूराधिके क्रूरफलं व्याधिशोकभयावहम् ॥ उभे शुभाधिके पुंसां फलं पूर्णमनोरथाः ॥ २ ॥ होराशुभाधिके वीर्यं शरीरे राज्यसम्पदाम् ॥ द्रेष्काणे च शुभे मासे धनसौभाग्यसम्पदः ॥ ३ ॥ क्रूराधिके महाव्याधिश्चित्तोद्वेगमसद्व्ययम् ॥ चतुरंशे शुभाधिक्ये पितृमातृधनान्वितः ॥ ४ ॥ क्रूराधिक्ये मनोद्वेगचित्तचिंता च दारुणा ॥ पंचमांशेऽधिकशुभे पुत्रभृत्यादिसौख्यता ॥ ५ ॥ षष्ठमांशे शुभे मासे रिपुं जित्वा च दुःसहम् ॥ षष्ठांशे क्रूरताधिक्ये जायते गोधने भयम् ॥ ६ ॥ सप्तमांशे

शुभाधिक्ये स्त्रीपक्षे पक्षसम्पदा ॥ नगांशे क्रूरताधिक्ये मार्गे विड्डुरसम्भवः ॥ ७ ॥ शुभाधिक्ये अष्टमांशे शेषरी- रोगसंपदः ॥ क्रूराधिक्ये महात्पाधिशोतपित्तमहारुजः ॥ ८ नवांशे च शुभाधिक्ये विविधो लाभवीर्यवान् ॥ क्रूराधिक्ये असत्सिद्धिः देहः क्लेशस्य भाजनम् ॥९॥ दशांशे च शुभे मा राजपक्षजयावहम् ॥ दशांशे क्रूरताधिक्ये कर्मकारणसंभवः ॥ १० ॥ रुद्रांशे च शुभाधिक्ये आपुर्वृद्धिर्यशोबलम् । क्रूरे हानिर्महादुःखं दुर्मती रिपुसंभवः ॥ ११ ॥ द्वादशांशे शुभाधिक्ये लाभत्यागसुखावहम् ॥१२॥ इति द्वादशवर्गीफल सर्वग्रहानुसारेण ज्ञेयम् ॥८४॥८५॥ इति द्वादशवर्गिकाः ॥

अथ हर्षस्थानानि ॥ सूर्यादितो हर्षपदानि खेट ९ त्रि ३ तर्क ६ चंद्रे १ श ११ शरां ५ त्य १२ संख्या ॥ ग्रहा निजोच्चं स्वखिलैर्निरुक्तं मुनीश्वरैर्वा स्वगृहं गृहे च ॥८६॥ त्रिकं त्रिकं लग्नवशान्निरुक्तं पुंस्त्रीग्रहाणां खलु हर्षसंज्ञम् ॥ सूर्यारजीवा नरखेचराः स्युः स्त्रीखेचरौ शुक्रनिशीशसंज्ञौ ॥ ८७ ॥ इति हर्षस्थानम् ॥

अथ हर्षस्थानान्युच्यन्ते—यत्र स्थितो ग्रहो हर्षितो भवति तत्स्थानं हर्षस्थानशब्देनोच्यते । सूर्यादितोहर्षपदानीति- हर्षस्थानानि ग्रहाणां चत्वारि त्रयः सूर्यादित इति । सूर्यादी- नां खेटत्रितर्क इत्यादयो ग्रहाः भावाः हर्षपदानि । तद्यथा सूर्यः नवमभावे स्थितो हर्षस्थानी एवं चन्द्रस्तृतीये भावे भौमः षष्ठे भावे बुधो मूर्तौ गुरुरेकादशे । शुक्रः शनिर्द्वादशे । इत्येकं हर्षस्थानं । अखिलैः

ओच्चद्वितीयं हर्षस्थानं निरुक्तं । स्वोच्चस्थो ग्रहः हर्षस्थानी ।
स्वगृहं स्वक्षेत्रं तृतीयं हर्षस्थानं । स्वक्षेत्रस्थो हर्षस्थानीत्यर्थः
॥ ८६ ॥ त्रिकं त्रिकमिति—लग्नवशात् त्रिकं २ भवनं
पुंस्त्रीग्रहाणां क्रमेण हर्षस्थानं । लग्नप्रभृतिषु त्रिषु स्थानेषु
स्थितः पुरुषग्रहो हर्षस्थानी । चतुर्थादित्रिषु स्थितः स्त्री-
ग्रहो हर्षस्थानी एवं । सप्तमादिषु भावेषु स्थितः पुरुषग्रहो हर्ष-
स्थानी । दशमादित्रिषु भावेषु स्थितः स्त्रीग्रहो हर्षस्थानी । इदं
चतुर्थं हर्षस्थानं । प्रति हर्षस्थानं पञ्चदश कला विंशोपका
पंचबलं प्रकल्प्य चतुर्थं वृश्चिको लग्नं तत्र भौमः स्वामी भागः
१६ मितः दशमं राज्यस्थानं । तत्र स्वामी रविर्भागद्वयं
सिंहलग्नम् ॥ षष्टिकला ६० विश्वा २० सूर्यभौमगुरवो
नरखेचराः पुरुषग्रहा ज्ञेयाः । शुक्रचंद्रौ स्त्रीग्रहौ । बुधशनी
तु नपुंसकत्वादपेक्षितौ । अत्र उक्तभवने कोऽपि नास्ति स्व-
गृहे कोऽस्ति तेन विश्वाधउत्कोऽपि नास्ति । चंद्रशुक्रयोः-
स्त्रीग्रहत्वाद्विश्वा ५ पंचमो ज्ञेयं । संतानंत्रे हर्षस्थानद्वय-
मन्यथया—"दिवसे नरग्रहाणां स्त्रीणां रात्रौ तृतीयं च ॥
मध्याद्यावलग्नं भूकेंद्रात्सप्तमं नराणां च ॥ लग्नाद्यावद्धिबुक
धूनात्मंत्रे योषिता चतुर्थी च" ॥१॥ एवं तन्मतम् ॥८७॥

अथ योगत्रयं ॥ रविः शराग्नि १५ स्तपनः १२
शशांको स्वर्णमहीजो वसु ८ भिश्च भागैः॥ त्रभा-
गवौ सप्तलवे ७ नभोगेंद्रेज्यमंदौ प्रयुतिं करोति
॥ ८८ ॥ शीघ्रग्रहः स्तोककलैश्चमंदात् हीनोऽ-
थलिप्ताद्वैविलिप्तिकाप्याप्य ॥ तुल्योऽथवा चेत
ध्रुवमित्थशालो योगः स नाम—

अथेत्थशालादियोगत्रयमाह—रविः शराब्जैरिति—रविः शराब्जैः पंचदशभिरंशैः १५ प्रयुतिं करोति । मंदग्रहे योगं करोतीत्यर्थः । एवं चन्द्रस्तपनैर्द्वादश १२ भिरंशैः भौमो वसुभिरष्टभिरंशैः बुधशुक्रौ सप्तभि ७ र्भागैः देवेज्यमंदौ गुरुशनी नभोगैर्नवभि ९ रंशैरिति । ताजिकाचार्याणां मते राहोर्ग्रहत्वेऽपि तस्यांशा नोक्ता तर्हि प्रायस्तस्याः शशाङ्कवदिति गम्यते ॥ ८८ ॥ अथ योगज्ञानोपायमाह ॥ शीघ्रग्रहः स्वोक्तलवैरिति—शीघ्रग्रहः स्वोक्तलवैः रविः शराब्जैरित्यादिकैरुक्तांशैर्मंदात् मंदग्रहत्वाद्धीनो भवति तदेत्थशालनामा योगोऽपरनाम मुथशिलः । एतदुक्तं भवति एकराशिस्थयोः शीघ्रमंदग्रहयोरंतरे क्रियमाणे स्वस्वोक्तभागप्रमाणमंतरं भवति तदा योगसंभवः अधिकेऽतरे योगस्यासंभव इत्यर्थः । एवं भिन्नराशिस्थयोश्चापि उक्तभागप्रमाणेंऽशांतरे योगसंभवः नाधिकेऽतरे । ताजिकातंत्रवुत्तावपि दृष्टदृश्ययोरंतरत्वे सति दीप्तांशतुल्या यदि अन्तरभागास्तद्दृष्टा दशां पश्यति अधिके न पश्यति । अल्पे पश्यत्येव । अर्थादिति एवं भविष्यदादिभेदेन त्रिधा अवस्थाविशेषणस्यैव सङ्गांतरमाह । अथेति पादपूरणे । अथवा शीघ्रग्रहो मंदग्रहाल्लिप्तार्द्धात् विलिप्तिकार्द्धात् हीनः लिप्तिः कला । तस्या अर्धं त्रिंशद्विकलाः । विलिप्तिका विकलाः ताभ्यां हीन इत्यर्थः । लिप्तार्द्धं विकलाभ्यां हीनत्वे समता भवत्येव । तथापि मूलानुकूलं कल्पनीयमिति विकल्पः कृतः । अथ उभावपि तुल्यौ समौ भवतस्तदापि मुथशीलः ।

उदाहरणं— वृश्चिको लग्नं तत्र भौमः स्वामी भागाः १६ मितः दशमं राज्यस्थानं तस्य स्वामी रविर्भागद्वयं । सिंहे लग्नस्वामी मकने ज्ञेयं । दशमेशो राज्यदाता एवं यथासंभवं

सर्वत्र ज्ञेयं । अथानयोरंतरे भागाः १४ । रविः मुत्थशिल-कृत् । उक्तं च ग्रंथांतरे– " तिथीननागाङ्कनवांगगोंऽशी १५।१२।८।७।९।७।९ दीप्ते युतिं मंदखगे त्वमन्दः ॥ एकर्क्षगः पृष्ठत एष दीप्तैर्भागैस्तथाल्पैः प्रथमो यमाद्यैः ॥ १ ॥ क्षेत्रां-त्यगश्चाशु गतिर्विवक्ष्यैरंशान् स्थिरस्यापि परर्क्षगस्य ॥ यदेत्थशालं मुनयो वदन्ति योगं भविष्यत्फलदं तदेव्यम् ॥२॥ गणेशकृतवर्षफलपद्धतौ "एकर्क्षेऽधिकगोऽल्पगात्……काल-वो दीप्तांशमध्ये क्रमात् ॥ तद्वाद्ये भवदेत्त्थकं मुथशिलं पूर्णं तु तौ चेत्समौ ॥ आत्यांशस्य चलात्स्वदीप्तिविवरे मंदेऽग्रगोऽन्ये-पकं ॥ दीप्त्यंशावधि चैकभेऽग्रचले स्यादीशराफाह्वयः ॥१॥ प्रोक्तोऽयं फलदः पुरा तदितरे स्वाख्याफलास्तेऽथवाऽस्या-पीहभवेद्दृयोर्मुथशिलः कंबूल उक्तश्च ते ॥ स्वर्क्षोच्चे शुभवा स्व-हद्दकमुखे मध्ये स्वनीचारिभे नीचाः स्युः सततं पृथग्गृहगते अन्योन्यदृष्टापि ते॥२॥पुनः । लग्नेशोऽप्यष्टमाधीशो मुंथेशश्चैक-राशिगः॥ तदर्पे मरणं वाऽपि भिन्नर्क्षे इत्थशालकृत् ॥ १॥ पुन-र्विशेषश्चात्र वामनताजिकात् ॥ ईषत्फलोऽसौकथितश्च भागैः स्वल्पैस्तथा मध्यबलः सचोक्तः । एकांशकस्थे समलिप्तिकेऽत्र शीघ्रे च मंदे फलमत्र सम्यक् ॥ १ ॥ राश्यंतगः शीघ्रगति-स्थिरस्य भागान्विविक्षुः परराशिगस्य । यदा भवेत्तत्प्रवदंति योगमेषो भविष्यत्फलदं सदैव ॥ २ ॥ लिप्तार्द्धविलिप्तिका-भ्यां यदि हीनो मंदतोऽथ तुल्यः स्यात्॥ तत्पूर्णमित्थशालं मुथ-शिलमथ कथ्यते तज्ज्ञैरिति "॥ चंद्रमसा सह मुथशिलं करोति बुधश्चंद्रं विना अन्यैर्ग्रहैः सह शुक्रचंद्रबुधविवर्जितैरन्यैः सह। रवि-भौमगुरुशनिभिः सह।भौमशनिबृहस्पतिभ्यां सह बृहस्पतिः शनि-ना सह शनिर्गुरुणासह चारवशात् शीघ्रगतिर्भवति तदा नान्य-था। उक्तं च–"सूर्यः शनिः शीघ्रगतिश्च चारवशेन मंदग्रह-

पृष्टवर्ती ॥ गत्वा स्वयं चेन्नवभिस्तथाल्पैर्भागैर्पुर्ति मंदगतिं विदध्यात्" इति ॥ १ ॥ वक्रगोऽपि ग्रहः इत्थशालं प्रकरोति तस्परद्द इति नामांतरं । उक्तं च—चक्रेण द्युमणिकराभिगामि- त्राऽस्तं भासेन व्ययरिपुनाशगामामि वा क्रूरेण ॥ कमिनन सः प्रदेत्थशालस्तद्वद् हरति फलं महर्पणीयम् ॥ ८९ ॥

अथेशराफयोगमाह—

शीघ्रग्रहो मंदखगा यदाऽग्रे प्रयान्ति रूपांतरभा- गकेन॥ तदीशराफः कथितो महद्भिः कष्टप्रदोऽसौ मुशरीफको वा ॥ ९०॥ रात्रीश्वरश्चेद्विखगेन सार्द्धं करोति नूनं यदि चेत्थशालम्॥ कबूलकोऽसौ क- थितस्त्रिभेदैः संपूर्णमध्याधमकैर्महद्भिः ॥ ९१ ॥

शीघ्रग्रह इति—शीघ्रग्रहो मंदग्रहादेकेनांशादिनाऽधिके नांशाधिको भवति तदेशराफयोगोऽपरं नाम मुशरिफकोऽय योगः कष्टप्रदः ।स शीघ्रग्रहोऽर्कभागगः शुभः । मन्दमतिक्रम्य द्वादशभागांतरेऽग्रगस्तदा शुभेष्टफलप्रदः । उदाहरणं— "धनुर्विलग्ने गुरुदृष्टि १६ भागो बुधोऽह्निचंद्रे १७ मिथुने गतोऽत्र न कन्यकायां वरलाभसिद्धिः ६ स्यात्पिंडतुल्येऽ २८ त्र बुधे तदाप्तिः॥ १॥पुनर्बुधे २८ भागतुल्ये सति अर्कभागांतरे बली बुधो जातस्तेन तदा वरप्राप्तिः । उक्तं च—धरो धराधरे लवं पुरः स ईशराफकः ॥ शुभो न मूसरीफकः ·शुभोऽर्कभागगस्तु चेत् ॥ १ ॥ ९० ॥ अथ कंबूलयोगमाह—रात्रीश्वरश्चेदिति— रात्रीश्वरश्चंद्रश्चेयदि द्विखगेन सार्द्धं ग्रहद्वयेन सह इत्थशालं करोति तदा कंबूलनामा योगः पूर्वमुभयोर्मुथशिलो भवति। त-

न्मध्ये चंद्रोऽप्येकेन सह मुत्थशिलं करोति तदा कंबूल इत्यर्थः। यतः सर्वैः ग्रहैः सह चंद्रः इत्थशालकारकः सर्वेभ्योऽपि शीघ्रत्वात् चंद्रेण सह कोऽपीत्थशालको नेति तात्पर्यार्थः । स कंबूल-योगः। संपूर्णमध्याधमकैस्त्रिभेदस्त्रिप्रकारः ॥ ९१ ॥

**मिथः स्वगेहोच्चगतौ प्रधानं मध्यं स्वगेहारिगृहा-दिगौ च ॥ नीचारिगेहावधमं निरुक्तं कंबूलकं चेदथ संग्रहैश्चैः ॥ ९२ ॥ यदीत्थशालः खचरैश्च-सौम्यैः कृतोऽन्दलग्ने परिपूर्णकश्च ॥ धत्ते तदासौ विविधान् विलासान् धनागमं कांतिविवर्द्धनं च ॥ ९३ ॥**

तदेवमकारत्रयमाह–मिथः स्वगेहोच्चगताविति– उभावपि ग्रहौ स्वगेहोच्चगतौ स्वराशिस्वोच्चस्थौ भवतः । तदा कंबूलं प्रधानं ज्ञेयं । मध्यस्वगेहारिगृहादिगैर्वा तन्मध्यादेको ग्रहः स्वगृहे स्वोच्चे वा तदन्यो ग्रहः शत्रुस्थो नीचस्थो वा तदा मध्यकंबूलं ज्ञेयं । मध्यमफलो नाति श्रेष्ठो नात्यधमः ॥ नीचारिगेहावधममिति—उभावपि शत्रुनीचराशिगतौ तदा अधमकंबूलमिति प्रकारत्रयं । तथा च लग्नेशकार्येशौ स्वगृहोच्चेवर्त्तमानौ कृतमुथशिलौ तथापि चंद्रोऽपि स्वोच्चे स्वगृहे वर्तमानः कृतमुथशिलं तदोक्तयोगः । अन्यथा मध्यमाधमौ ग्रंथोक्तवत् ज्ञेयौ । तत्रोदाहरणं– मेषलग्ने भौमभागाः ९ कर्केशचंद्रांशाः २८ सूर्यांशाः २ एवमपरेऽपि कंबूलाः । यथा चक्रिणो बुधान्मंदग्रहात् १।१४।५५।५४ गतिः ३८।५२ शुक्रः शीघ्रग्रहो १।१०।१५।२३ गतिः १३।२-अंतरे क्रिय-मासो अंशाः ४।४० स्वोक्तत्वा ७ मध्ये हीनस्तेनेत्थशाल-कृत् । शुक्रो बुधेन सह । एवमंतरे क्रियमाणे समस्योऽधिके

न्यूनांतरेण योगकृत् एवमन्येषां ग्रहाणामपि ज्ञेयं। शुक्रः शीघ्रो ११०।१५।२३ रवेः ११९।२६।५१ मंदादेकेनांशाधिकस्तेन रविणा सह. मुसरीफकारी। एवमन्येऽपि। चंद्रः शीघ्रः रविशुक्राभ्यां मंदाभ्यां हीनोऽपि उक्तभागेभ्यो १२ अधिकन्यूनांतरं तेन न कंबूलकृत्। ग्रन्थांतरे. "उभयेत्थशालयोगे यदि चन्द्रोऽप्यत्र मुत्थशिलविधायी॥ तत्कम्बूलं हि भवेदुत्तममध्यमाधमैर्भेदैरिति" ॥९२॥९३॥ इति योगत्रयम् ॥

अथ वर्षेशार्थे त्रिराशिनाथाः ॥ मेषादितश्च हरिभाद्धनुषश्चतुर्णां सूर्यास्फुजिच्छनिसिता दिनपास्त्रिभानाम् ॥ रात्रौ सुरेज्यशशिसौम्यकुजाः सदेशाः कोडारनाकपतिवंदितरात्रिनाथाः ॥ ९४ ॥ घस्रे दिनाधिपसदेश्वरयोस्तु मध्ये यः स्यात्तयोर्बलयुतस्त्रिभपो निरुक्तः ॥ रात्रौ सदाधिपनिशेश्वरयोर्बलाढ्यो ज्ञेयो बुधैस्त्रिभपतिः खचरो नितांतम् ॥ ९५ ॥

अथ वर्षेशार्थं त्रिराशिनाथानाह । मेषादित इति— त्रयश्च ते राशयः पदार्थाश्चेति त्रिराशं यद्विवारात्रिसदालक्षणास्तेषां नाथा इति । मेषादितश्चतुर्णां भानां राशीनां तथा हरिभात् सिंहाच्चतुर्णां राशीनां तथा धनुर्द्धरराशितश्चतुर्णां राशीनां क्रमात् सूर्यशुक्रशनिशुक्राः दिनपाः। दिवा वर्षलग्ने सति पतयो भवंति । तद्यदा दिवावर्षलग्नं भवति तदा मेषस्य सूर्यः वृषस्य शुक्रो मिथुनस्य शनिः कर्कस्य शुक्रः पुनः सिंहस्य सूर्यः कन्यायाः शुक्रः तुलायाः शनिः वृश्चिकस्य शुक्रः एवं धनुषः सूर्यः मकरस्य शुक्रः कुंभस्य शनिः मीन-

स्य शुक्रः ५ इति । क्रोडारनाकपतिचंद्रितरात्रिनाथाः श-निभौमगुरुचंद्राः । यथा मेषस्य सदा शनिः स्वामी वृषस्य भौमः मिथुनस्य गुरुः कर्कस्य चंद्रः सिंहस्य शनिः कन्यायाः भौमः तुलाया गुरुः वृश्चिकस्य चंद्रः। एवं धनुषः शनिः मकरस्य भौमः कुंभस्य गुरुः मीनस्य चंद्र इति ॥ ९४ ॥ एतेषां मध्ये कस्त्रिराशिपस्तमेवाह— घस्रे दिनाधिपेति— घस्रे दि-वसे पूर्वोक्ताधिपसदेशयोर्मध्ये यो यद्युतो बलवान्भवेत् स त्रिभपस्त्रिराशिनाथ उक्तः । एवं सदेशरात्रीशयोर्मध्ये यो बल-वान् स त्रिराशिनाथः । अथात्र दिवावर्षलग्नं कर्कस्तस्य स्वामी चंद्रः अनयोर्मध्ये बलवान् शुक्रः । तेन त्रिराशिनाथः शुक्रः ।

| पुरातनमिदं त्रिराशिपतियन्त्रचक्रम् । | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| सू | शु | श | शु | सू | शु | श | शु | सू | शु | श | शु |
| बृ | च | बु | म | बृ | च | बु | म | बृ | च | बु | म |
| श | मं | बृ | च | श | म | बृ | च | श | म | बृ | च |

उक्तं च संज्ञातंत्रे— “मेषादि च-तुस्त्रिराशिके-श्वराः रवि-सितार्किभृगवोऽह्नि ॥ गुरुशशिबुधभौमाः शनिकुजगुर्विन्दवः नक्तम्” ॥ ९५ ॥

अथवा ॥ घस्रेशाः स्फुजिदेनिदैत्यसचिवा जीवेन्दुचन्द्रात्मजाः । माहेयार्कजभौमदेवगु-रवश्चन्द्रास्त्रिभेशा इमे ॥ घस्रे जीवविधुज्ञभौमतप-नाः शुक्रार्किशुक्रार्कजा भौमेज्यक्षणदाधिपा नि-शिगता लग्ने त्रिभेशा ह्यजात् ॥ ९६ ॥

अथ प्रकारान्तरेण सर्वसम्मतं प्रवर्त्तमानं त्रिराशिनाथमाह— घस्रेशाः स्फुजिदेनीति—दिवा वर्षलग्ने मेषस्य सूर्यः वृषस्य

| संप्रति लोके वर्त्तमानं त्रिराशिपतिचक्रमिदम् । | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| सू दिवा | शु | श | शु | बृ | चं | बु | म | श | म | ब | च |
| बृ रात्रो | च | बु | म | सू | शु | श | शु | श | म | बृ | च |

शुक्रो मिथुनस्य शनिः कर्कस्य शुक्रः सिंहस्य गुरुः कन्यायाश्चन्द्रः तुलाया बुधः वृश्चिकस्य भौम. धनुषः शनिः मकरस्य भौमः कुम्भस्य गुरुः मीनस्य चन्द्रः एवमेते त्रिराशिनाथाः । रात्रौ वर्षलग्ने मेषस्य गुरुः वृषस्य चन्द्रो मिथुनस्य बुधः कर्कस्य भौमः सिंहस्य रविः कन्यायाः शुक्रः तुलायाः शनिः वृश्चिकस्य शुक्रः मकरस्य भौमः कुम्भस्य गुरुः मीनस्य चन्द्रः एते त्रिराशिनाथाः । अथ सदेशत्वं नास्ति यथाऽत्र दिवा-वर्षलग्नं कर्कस्तेनशुक्रस्त्रिराशिनाथः ॥ ९६ ॥

## अथ वर्षेशनिर्णयः ॥

अथ समाधिपतेः स्फुटनिर्णयो नहि कृतो यदि वर्षनिवेशने॥ कथमिदं फलमत्र विनिश्चितं भवति सोऽयमतः प्रविचार्यते॥९७॥ जन्माङ्गपोऽब्दाङ्गपतिस्त्रिभेशो मुन्थाधिपोऽर्को दिवसे निशीन्दुः ॥ अमीषु यो वीर्ययुतोऽब्दलग्नं पश्येत् ध्रुवं वर्षपतिः स चात्र ॥९८॥ यद्यत्र लग्नं बहवो नभोगाः पश्यन्ति चेत्पंच दिवौकसां हि ॥ मध्येऽधिकारा बहवो हि यस्य तस्याब्दपत्वं गदितं प्रवीणैः ॥९९॥ दृक्तुल्यकत्वे सबलोऽब्दनाथः स्याद्वीर्यसाम्ये-

ऽब्दपतिश्च तेषाम् ॥ दृष्ट्याऽधिको यः कथितो दृगादिसाम्येंत्थिहेशोऽब्दपतिश्च सम्यक् ॥१००॥ मासप्रवेशोऽब्दपलग्ननाथो मासप्रभुर्वै परिकल्पनीयः॥ द्युवेशलग्नस्य पतिर्दिनेशो विचिन्तनीयस्तु शुभाशुभार्थम् ॥ १०१ ॥ प्रश्नाङ्गपो वर्षपतिः प्रकल्प्य सूर्येश्वरो जन्मविलग्ननाथः ॥ मुन्थाधिपः प्रश्नविलग्नतश्च त्रिराशिपो घस्रपतिः पुरावत् ॥१०२॥ इति वर्षेशविचाराध्यायः ॥

अथ वर्षेशार्थं पंचाधिकारिणः वर्षेशनिर्णयं चाह ॥ अथ समाधिपतेरित्यतश्चत्वारः श्लोकाः सुकराः। विशेषश्चायं । वर्षेशनिर्णये बलहीनो यो लग्नं पश्यति स एव वर्षेशः कार्य इति रहस्यं। दृष्टिरहितोऽधिकबलोऽपि न कार्यः । यत्तदुक्तं ग्रहज्ञाभरणताजिके—"मुंथा सवांगाब्दशरीरनाथादि इंदुर्निशीच त्रिभेशाः पंचग्रहाणामधिको यः स च हायनेशः ॥ ॥ १ ॥ लग्नं न पश्यत्यधिवीर्यखेटो न सोऽब्दपो हीनबलोऽब्दनाथः ॥ लग्नं प्रपश्यत्यथवीर्यसाम्ये दृष्ट्याधिको यः स च हायनेशः ॥ २ ॥ दृष्टेऽब्दपत्वे बहुखेचराणां स्युः पंचवर्ग्यां बहवोऽधिकाराः ॥ यस्याब्दपत्वं खलु तस्य कल्प्यं दृष्ट्यादिसाम्येऽह्नि रवेर्निशीन्दुः ॥ ३ ॥ त्रिराशिकेशो न भवेदसौ चेच्चंद्रेश्वरस्तेऽपि खगेन येन ॥ मुख्यास्ययोगस्य य ईश उक्तो विना न चेन्दुर्गृहपोऽब्दपस्तु ॥ ४ ॥ पश्यंति यंचापि न चेद्विलग्नं तदेषु वर्गाधिक ईश उक्तः ॥ वर्गे समानेऽपि च योऽधिवीर्यः स एव खेटो ग्रहविद्भिराद्यैः" ॥ ५ ॥ पुनरुक्तं च—"निश्यब्जर्क्षपतिर्दिवार्कभपतिर्जन्माब्दलग्न-

त्थिहेशास्त्रैराशिकरोऽत्र पंचसूसदा वीर्याधिको लग्नदृक् ॥ सोऽब्देशोऽल्पबलेऽपि दृष्टिसहितः सौम्ये बले योऽधिदृक् दृक्साम्येऽहि रविर्निशीन्दुरसुकौ नोचेत्रिराशीश्वरः ॥ १ ॥ यथाऽत्र जन्मलग्नस्वामी गुरुः १ वर्षलग्नस्वामी चन्द्रः २ मुंथहास्वामी शनिः ३ दिनपतिः सूर्यः ४ त्रिराशिकेशः शुक्रः ५ । शनिचंद्रौ लग्नं तुल्यं पश्यतः तेन साम्यत्वात् बलाधिकश्चंद्रो वर्षेशः विशेषोऽयं—"बह्वाधिकारोऽपि न वीक्ष्यते लग्नमस्य न बलं स्यात् ॥ तुल्याधिकारवानपि पश्यति लग्नं च बलयुक्तः ॥ १ दृष्ट्या सबलोऽपि वर्षेशश्चेत्पंचापि तुल्यं पश्यंति तदा यस्य बहवोऽधिकाराः स वर्षेशः । यदि पंचापि न पश्यंति तदा पंचवर्गेषु यस्याधिकवर्गः स वर्षेशः । यदि पंचानामपि अधिकारदृष्टिबलानां समत्वं तदा मुथहेशो वर्षेशः इति । समरसिंहरुवौ—बलस्य साम्ये च दिवार्कस्येन्दोः रात्रौ च॥ शशधरैश्वर्ये येन सहास्य मुथशिलं स पतिश्चंद्रेश्वरस्तहने " ॥१॥ शशधरैश्वर्यं इत्यस्य व्याख्या । चंद्रस्येश्वरत्वे जाते येन ग्रहेण सह चंद्रो मुथशिलं करोति स ग्रहो वर्षेशः । तं मुथशिलं विना चंद्रेश्वरः चंद्र एव वर्षेश्वर १ इति॥ अथ वर्षेशानयनं आचार्यैर्भिन्नभिन्नमुक्तमस्ति । परं बहुमतमन्वेष्टव्यमिति रहस्यं । "आगमज्योविश्शास्त्रे विमतिपन्नो न योग्यमस्माकं" इत्युक्तत्वात् ॥ १०० ॥ अथ मासेशदिनेशज्ञानमाह— मासप्रवेशोद्भव इति—स्पष्टार्थः ॥१०१॥अथवर्षलग्नात्पंचाधिकारज्ञानमाह—प्रश्नांगप इति— यस्मिन्समये पृच्छकः पृच्छति तत्सामयिकलग्नं प्रश्नलग्नं प्रश्नलग्नस्वामी प्रकल्प्य प्रश्नलग्नाच्चतुर्थभवनस्वामी जन्मलग्नस्वामी प्रकल्प्य प्रश्नलग्नमुंथाधिपः । त्रिराशिनाथः वर्षलग्नवत् घस्त्रेशास्फुजिद्दैनिदेत्यहत्यादिना कार्यो पञ्चपतिः

पुरावत् । घस्रपतिग्रहणात् रात्रिपतिरपि ज्ञेयः । दिवाप्रश्नलग्ने रविः रात्रिप्रश्नलग्ने चंद्र इत्यर्थः । मुंथाज्ञानं वक्ष्यति । यावत्तमं वर्षं तन्मुंथाशब्देनोच्यते इति कल्पनां कृत्वा वर्षेशं च कृत्वा फलाफलं वाच्यं ॥ १०२ ॥ इति वर्षेशविचाराध्यायः ॥

## अथ वर्षेशफलाध्यायः ॥

षष्ठाष्टांत्यविवर्जितोऽस्तरहितः सन्मित्रवर्गे स्थितः पुष्टोऽसौ विविधं सुखं धनचयं पुत्रार्थमित्रादिकम् ॥ मध्ये मध्यमिदं करोति विफलं नष्टैरितो भीतिकृत् दग्धे रोगभयं नृणां धनहृतिः स्यात्स्वीयपाकोदये ॥ २ ॥ अब्दाधिपेऽब्जरमणौ सबले प्रतिष्ठा प्राप्तिस्ततो निजकुले बहुराज्यलाभः ॥ स्थानान्तराद्भवति भूधनकीर्तिमित्रलाभस्तथा बहुसुखानि रिपोर्विनाशः ॥ ४ ॥ पुत्रान्नृपात्सुजनतोऽल्पसुखं नराणां स्यान्मध्यवीर्यसहिते द्युमणौ दशायाम् ॥ कुर्याद्दरिद्रमपि रोगभयं विवादं लोकैस्तथा नृपजनैः सह चाल्पवैरम् ॥ ५ ॥ नष्टे रवौ भवति वैरिजनाद्विरोधो रोगागमो निजजनाद्भयमुग्रकं स्यात् ॥ द्रव्यक्षयश्च सततं कलहः स्वमित्रात् दग्धे च दूरगतिदौस्थ्यजनापवादः ॥ ६ ॥ इति रविफलं सम्पूर्णम् ॥ वर्षाधिपे हिमरुचौ परिपूर्णवीर्यो वित्तागमो नृपजनान्नृपतेर्धनाप्तिः ॥ सौख्यानि चात्र विविधानि

कलत्रतः स्युः श्वेतादिवस्तुवशतः प्रकरोति लाभम् ॥ ७ ॥ मध्ये विधुर्नृपजनान्नृपतेर्विरोधं वित्तक्षयं स्वजनतः प्रकरोति वैरम् ॥ स्त्रीवर्गतः सततमल्पसुखं कृशत्वं वैराग्यदुःखजननं भयमुग्रकं च ॥ ८ ॥ नष्टे भयं भवति वातकफादिपीडा वैरोदयो निजकुले नृपतेर्विरोधम् ॥ स्थानान्तराद्रिपुभयं त्वसुखं च दग्धे मृत्योर्भयं तनुभृतां हि भृगोश्च पाके ॥ ९ ॥ इति चंद्रफलम् ॥ वीर्यान्विते क्षितिसुते नृपतेर्धनाप्तिः सेवापते रिपुगणाद्विजयो रणश्च ॥ सेवाधनं भवति मार्गवशाच्च सौख्यं स्त्रीसङ्गमाच्च विविधं सुखमत्र विन्द्यात् ॥ ॥ १० ॥ मध्ये कुजे भवति लोहभयं विवादं कुर्यात्कृशत्वमखिलाङ्गमनल्परोगम् ॥ वैरोदयं नृपजनेषु धनक्षयं च चौराद्भयं स्वजनतो ह्यथवा-नराणाम् ॥ ११ ॥ चौराग्रिरुग्ज्वलनभीत्यपकीर्तिलाभः पित्तोदयो भवति पादमुखाक्षिदेशे ॥ दुष्टाद्भयं निजजनाद्धनधान्यनाशः स्त्रीमित्रबन्धुकलहं क्षितिजे विनष्टे ॥ १२ ॥ इति भौमफलम्॥ वर्षाधिपे शशिसुते सबलेऽतिसौख्यं सेवाधनं लिखनतः पठनादिलाभम् ॥ स्त्रीमित्रसौख्यमतुलं सुततश्च नूनं वाणिज्यतो धनसमागमनं विलासम् ॥ १३ ॥ मध्यश्च सोमतनयो निजवाक्यदो-

पात्सर्वार्थहानिमतुलां प्रकरोति भूपात्॥ स्त्रीमित्रपुत्रकलहं सुखमल्पमत्र वैरोदयं नृपजनाच्च जनाच्च तद्वत्॥ १४॥ नष्टे बुधे नृपभयोऽन्यतमाच्चितश्च क्लेशोदयं स्वजनतोऽर्थभवो विवादः॥ चोराग्र्यं हृदि गलामयकृत् च नेत्रे पीडा भवेन्निखिलमध्यमकं च दग्धे॥१५॥इति बुधफलम्॥ देवार्चितो बलयुतः प्रमदाविलासं कुर्यात्सुमित्रसुततो विविधं च सौख्यम्॥ वित्तागमं नृपतितो विजयं रिपूणां विश्वासतां सकललोकजनेषु शश्वत्॥१६॥ नाकेश्वरस्य सचिवोऽल्पबलो नितान्तं लोकैर्विरोधमशुभं प्रकरोति भूपात्॥ वैरोदयं स्वजनतश्च वैरैर्विवादं कुर्यात् कृशलमपि चौरभयं सदाऽसौ॥ १७॥ निन्द्ये गुरौ खलु भवेच्च यतोऽर्थनाशो धर्मार्थहानिसुखबन्धुविरोधपीडा॥ पादाक्षिगुल्फजठरे जघने नराणां वातार्तिकृत्त्वरिभयं जलसंक्षयं स्यात्॥१८॥ इति गुरुफलम्॥ दैत्येश्वरस्य सचिवः परिपूर्णवीर्यो दद्याद्वराङ्गवनितासुविलासहासम्॥ आरोग्यताखिलविलाससुखं च लाभं क्षेम प्रतापविजयं सुमतिः प्रसादः॥ १९॥ मध्ये नृपात्स्वजनतस्त्वरितो विरोधः श्लेष्मार्तिकृच्च सुतदारभयं च कष्टम्॥ कार्यार्थहानिमपि मेहरुजोदयं च कुर्यान्न सौख्यमिह स्वीयदशाप्रवेशे॥२०॥

निंद्ये सिते खलु जनात्कलहो नितान्तं स्याद्वै- रितो नृपजनादसुखत्वमत्र ॥ सौख्यार्थहानिरति- शोकभयं विवादो दग्धे स्वपाकविषये मतिसंक्षयं च ॥ २१ ॥ इति शुक्रफलम् ॥ मंदेऽब्दपेऽधिक- बले वनपर्वताच्च लाभो महान् भवति भूतरुरोप- णाच्च ॥ वाणिज्यकृष्यवनितार्थसमागमश्च म्ले- च्छात्खलान्निजजनात्सुखमत्र नूनम् ॥ २२ ॥ मध्यः शनिः स्वजनराजजनाद्विरोधं वातार्ति- रुक् च नरपृष्ठिगलेषु नेत्रे दारिद्र्यदुःखपरिपीडन- मत्रकुर्याद्वैराग्यमर्थपरिहानिसुहृद्विरोधम् ॥२३॥ निन्द्ये तु सर्वमधर्मं नृसुहृद्विरोधं कष्टं क्रियावि- फलताऽनिलरुग्विकारः ॥ कार्यार्थहानिरथ पुत्र- सुहृद्विपत्तिर्दग्धेऽर्कजे मरणजं हि भयं नराणाम् ॥ २४ ॥ इति शनिफलम् ॥ इति ताजिकसारे वर्षेशफलम् ॥

अथ वर्षेशफलश्लोकाः स्पष्टाः । तत्र फलविषये ग्रहाणां चत्वारो भेदाः पूर्णबलं १, मध्य बलं २, मन्दबलं ३, दग्ध- बलम् ४ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥१०॥ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

अथैषां लक्षणम् ॥ स्वस्वोच्चकेषु परिपूर्णबलं खगानां हृद्दात्रिभागकनवांशगतेषु मध्यम् ॥

नीचारिवेश्मसहितेषु च दग्धवीर्यमस्तारिगे भवति नष्टबलं समन्तात् ॥ २५ ॥

अथैषां लक्षणमाह– स्वस्वोच्चेष्विति–स्वराशिस्थे स्वोच्चस्थे ग्रहे पूर्णबलम् । हद्दात्रिभागनवांशगतेषु स्वत्रिंशांशे १ स्वद्रेष्काणे२स्वनवांशे३ ग्रहे मध्यबलम्॥ अस्तारिगे नष्टबलम्– अस्तंगते ग्रहे शत्रुराशिस्थे ग्रहे यद्बलं भवति तन्नष्टबलं ज्ञेयम् ३ ॥ नीचारिवेश्म इति नीचस्थः । शत्रुगृहे यो गृहस्तस्य यद्बलं तद्बलं दग्धं ज्ञेयम् ४।वर्षाधीशो भवेद्राजा युगेधा जन्मलग्नपः ॥ मंत्री च मुंथहाधीशो होरेशः सैन्यनायकः ॥ ॥ १ ॥ रसादिसस्यधातूनां त्रैराशिपतिवस्तथा ॥ २५ ॥

अथ मुन्थास्पष्टीकरणम ॥ याताब्दसंख्याद्रविभिर्विभक्ताच्छेषैर्थिहा स्यादथ जन्मलग्नात् ॥ जन्मांगभागैः सहिता लवाद्यास्तात्कालिका सा ह्युगतिः प्रयुक्ता ॥ २६ ॥ मुंथागतिः प्रतिदिनं शरलिप्तिकाश्च यत्स्थानगा भवति तद्भवने नियोज्या ॥ सौम्यान्विता स्वपतिना सहितेक्षिता चेत् सौख्यार्थदा विविधकार्यकरा निरुक्ता ॥ २७ ॥

अथ मुथहाज्ञानमुच्यते । यातान्दसंख्यादिति—
[illegible]ताब्दसमूहाद् द्वादशभक्तात् शेषा गता इंथिहा मुंथा स्यात् । [illegible]न्मलग्नाज्जन्मलग्नमारिकल्प गणनाकाले याहक् अंशादि पर्ह लग्नं तेन युता सती तात्कालिका वर्षलग्नसमपिका [illegible]ाया ह्युगतिः मुंथा प्रयुक्ता भवेत् । यथा गताब्दाः५९ द्वादश-

भकाः शेषं ११ तेन एकादशी मुंथा गता द्वादशी वर्तमाना। अतो जन्मलग्नाद्गणिते ज्ञाता द्वादशे भागे चत्वारो भ्रमा गताः पंचमभ्रमस्यैकादशद्वादशभिः २। परावृत्तैको भ्रमः। अतो द्वादशे भावे यो राशिः स वर्षलग्ने यस्मिन्भावे आगतस्तत्र मुंथा ज्ञेया। अत्र जन्मलग्ने द्वादशभावे कुंभलग्नं वर्षलग्नेऽष्टमे भावे कुंभलग्नं अतो अष्टमे भावे मुंथा। स्पष्टार्थं। जन्मलग्नांशादिना ० । ११ । १ युता १० । १ । ११ । १ मुथा१, मुथिहा २, इंथा३, इंथिहा ४, अंथिहा ५, इत्यादि नामानि मुंथायाः ज्ञेयानि। मुंथा सूर्ययुता मुथहाधिपतिः लग्नस्थितैथा तुर्येपि इत्थशा पुंसिथादिसाम्यैंथिहेश इति निदर्शनानि। अष्टम्यानि लग्नस्थितैथा तुर्येथिहा इत्यादिषु पूर्वकर्मधारयः समासः कार्यः इति। शेषं स्पष्टम् ॥२६॥ अथ मुंथागतिमाह—मुंथागतिरिति—जन्मदिनमारभ्य प्रतिदिनं २ पंच ५ कला गतिर्ज्ञेया। वर्षलग्ने - यस्मिन्भावे मुंथा आगता तत्र यो राशिस्तस्यपोऽधिपः स मुंथहास्वामी ज्ञेयः। शेषं स्पष्टम् ॥ २७ ॥

प्रश्नांगकालेऽर्कलवैः शशांको यावत्प्रमाणैः प्रभवेच्च मुन्था॥ तत्तुल्यभैः प्रश्नविलग्नतश्च केचित्सुखार्थं प्रवदंति तज्ज्ञाः॥ २८॥ अथ प्रतिभावफलानि॥ लग्नस्थितैथा प्रकरोति सौख्यं नृपप्रसादं विजयं रिपूणाम्॥ हर्षोदयं बाहुबले प्रतापं वृद्धिं विलासं धनलाभपुष्टम्॥ २९॥ मुंथा धनस्था धनधान्यलाभं करोति मिष्टान्नरमागमं च॥ सर्वार्थसिद्धिं निजबाहुवीर्यात्सुखो-

दयं मित्रसुतोदयं च ॥ ३० ॥ लोकाज्जयं निजजनाच्च सहोत्थसौख्यं देहाविरुक् सकलकार्यसमृद्धिदात्री ॥ सत्संगमं च सबला तनुते हि मैत्री मुथा पराक्रमगता नृपतिप्रसादम् ॥ ३१ ॥ वित्तक्षयं रिपुजनादसुखस्य वृद्धिं वैरोदयं स्वजनरोगजनेषु कुर्यात् ॥ शुक्रार्चिकृत् हृदि रुजं च विवृद्धिदात्री तुर्येत्थिहा विविधरोगभयानि पुंसाम् ॥ ३२ ॥ प्रतापमाहात्म्यसुरार्चनं च स्याद्बुद्धिवृद्धिर्यशसः प्रवृद्धिः ॥ वित्तप्रलाभं जनताप्रसादः पुत्राप्तिसौख्यं सुतगेत्थिहायाम् ॥ ॥ ३३ ॥ नृपाद्भयं चौरभयं कृशत्वं निरुद्यमत्वं रिपुजं भयं च ॥ कार्य्यार्थहानिं कुमतीष्टवैरं षष्ठेत्थिहा दुष्टरुजं विदध्यात् ॥ ३४ ॥ सौख्यार्थनाशो वनितादिकष्टं चिन्ता मनोमोहमनल्परोगम् ॥ क्लेशोदयं श्रेष्ठजनेषु वैरं यशोविनाशो मदगेत्थिहायाम् ॥ ३५ ॥ दुष्टापयार्तिर्धनधान्यनाशो विपक्षभीतिर्यमनानि मोहः ॥ कीर्तेर्विनाशः स्वजनेषु पीडा नृपाद्भयं चाष्टमगेत्थिहायाम् ॥ ३६ ॥ धर्मार्थलाभं स्वजनेषु मैत्रीं नृपोत्तमैः प्रीतियशोदयश्च ॥ प्रमोदभाग्योदयकार्यसिद्धिं पुण्योपगेत्था प्रकरोति सौख्यम् ॥ ३७ ॥ मनोरथाप्तिः स्वजनैश्च सौख्यं निजेष्टमैत्रीं स्वजनोप-

कारम् ॥ भूपप्रसादो नभगेंथिहायां पुण्योदयः स्याद्विपुलो यशश्च ॥ ३८ ॥

अथ लग्नात् प्रकारांतरेण मुंथाज्ञानमाह—प्रश्नांगकालेऽर्कलवैरिति—प्रश्नकाले यावत्प्रमाणैरर्कलवै १२ द्वादशांशैः शशांकश्चंद्रो भवेत्तत्तुल्यभैः प्रश्ने विलग्नमानात् मुंथां प्रवदंति तज्ज्ञाः । एतदुक्तं भवति । यस्मिन्द्वादशे चंद्रो भवति तावत्तमे भावे प्रश्नलग्नान्मुंथा । यदा प्रथमे द्वादशांशे चंद्रस्तदा प्रथमे भावे मुंथा । यदा द्वितीये द्वादशांशे तदा द्वितीये भावे । एवमग्रेऽपि केचिन्मुसाबतुर्यभवनाद्गणना कार्या-इति वदंति । मुंथाराशिमादीकृत्य कुंडलीस्थापना मुंथहाकुंडली यस्य राशेर्नवांशो लग्नं तद्राशिमादीकृत्य कुंडलीस्थापना सा नवांशकुंडली। अपरं नाम दलीलकुंडली। ग्रहा यथास्थानस्थाः । इति मुंथाफलप्रकाराणि ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

नभगेत्थिहायामिति— यथा नभःशब्दस्सान्तस्तथाऽकारान्तोऽपि शब्दभेदे वर्तते इति ॥ ३८ ॥

मुन्थाकुण्डली ।

नवांशकुण्डली ।

सुखार्थलाभं शुभबुद्धिवृद्धिं मनोरथाप्तिं नृपतेः प्रसादम् ॥ निजेष्टसौख्यं मनसि प्रहर्षं करोति मुंथा भवगा शिवत्वम् ॥ ३९ ॥ निरुद्यमत्वं निजमित्रकष्टमनेकरुक्कृन्नृपतेर्भयं च ॥ धर्मार्थनाशो रिपुचौरभीतिस्त्वभीष्टपीडा व्ययगेऽथिहायाम् ॥ ४० ॥ मुंथा यदा जन्मनि चाम्बुरंध्रसप्तास्यगा यत्र गता समांगे । तद्भावहानिं प्रकरोति सौम्यैर्युतेक्षितासौ शुभगा तदा स्यात् ॥ ४१ ॥ भव्या लग्नभाग्यपुण्यधनगा मुंथा शुभार्थप्रदा नानाभोगविनोदसौख्यजनका प्रोक्ता त्रि ३ पञ्च ५ स्थिता ॥ नो भव्याऽस्तसुखारिगा व्ययकरा प्रांत्या १२ स्थिता चाष्टगा धर्मार्थक्षयकृद्गुदार्तिजननी भीतिप्रदा शत्रुगा ॥ ४२ ॥ मुन्था सूर्ययुता करोति नृपतः सौख्यं महत्स्वामिनां सौम्याढ्या शुभधीप्रदा कुजयुता रक्तार्तिकष्टप्रदा॥ मंदाढ्या त्वखिलाभयार्त्तिजनका दुःखप्रदा वा भृशं स्त्रीपुत्रात्सुखदा सुरेज्यसहिता शुक्रान्विता स्यात्तथा ॥ ४३ ॥ सौम्याढ्या धनधीप्रदा स्वपतिना युक्ता शुभा कीर्तिता दैवज्ञेन विलोकिता च सहिता शुक्रेण धर्मार्थदा ॥ राहोश्चोपगता करोति सततं नृपप्रसादं नृणाम् तत्पुच्छोपगतारिभीतिकलहान्दौस्थ्यं स्वदेहे ध्रुवम् ॥४४॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सौम्याढ्या धनधीप्रदेति—सामान्येन सौम्यग्रहैर्युता शेषं स्पष्टम् ॥४४॥

राहोर्मुखं भोग्यलवा निरुक्ताः पृष्ठं हि भुक्ताः स च लग्नकस्य ॥ अस्तं च तस्माद्यदितं च पुच्छं तत्र स्थितैर्या सभयार्तिदात्री॥४५॥ इति मुन्थाफलम्॥

अथ राहुमुखपृष्ठपुच्छस्थानमाह ॥ राहोर्मुखमिति—राहोर्ये भुक्त भोग्यांशा राहोर्मुखं ज्ञेयं । राहोर्ये भोग्यांशास्तएव कृत्वा भुक्तांशा राहोः पृष्ठं। तस्माद्राहुराशेरस्तं सप्तमो राशिः पुच्छं केतुरिति । स च लग्नभोग्यांशाः मुखं । भुक्तांशाः पृष्ठमिति॥ व्याख्याने यादृशी युक्तिर्नसंभावतीति विचार्यम् ॥ ४५ ॥

शुक्रेज्यौ यदि चास्तगौ हिमरुचिर्नीचानुगश्चेत्तदा कुर्याद्व्याधिभयं वियोगमशिवं कष्टं महद्दारुणम् ॥ छिद्रेशो यदि लग्नगस्तनुपतिश्छिद्रानुगश्चेत्तदा दृष्टौ तौ खलखेचरौ निधनदौ शस्त्राद्भयं स्यात्ततः ॥ ४६ ॥ मुंथाजन्मविलग्नपो यदि ततः सूर्यस्य बिम्बानुगो दृष्टः सूर्यसुतेन ताजिकमते सर्वार्थनाशो मतः ॥ जन्माङ्गाधदि हायनोद्भवतनुः स्यादष्टमे संयुतो दृष्टो वा मृत्युहेश्वरेण सततं कुर्याद्विनाशं भयम् ॥४७॥ लग्नास्तांत्यथ दुष्टगो हिमरुचिर्दृष्टः खलैः संयुतः स्वाभीष्टं प्रकरोत्यसौ च गुरुणा नो वीक्षितः संयुतः ॥ कष्टं स्याच्छनिना कुजेन दृष्-

नाच्छन्नाङ्कयं चाविदुः संदृष्टः प्रकरोति सौम्य-खचरैः सौख्यप्रदः शोभनः ॥ ४८ ॥ लग्नेशो यदि चाष्टगः क्षितिसुतेनालोकितोऽरिष्टदः सौम्येज्यौ यदि चास्तगौ तु विविधा पीडा भयं शत्रुता ॥ लग्नं पापखगं पुनर्यदि गतं घूनं तथा मृत्युकृत्पापैर्मृत्युसुखात्यवैरिभगतैः स्याद्देहिनां संक्षयम् ॥ ४९ ॥ मुंथा दुष्टयुता षडंत्यवसुगा शस्त्राग्निभीतिप्रदा दृष्टा सूर्यसुतेन सान्दसमये वातार्तिदा प्राणिनाम्॥सप्ताष्टारिसुखांत्यगा जन-नभाच्छिद्रोपगार्केत्थिहा दृष्टा सा खलखेचरैर्नि-धनकृत्सत्संयुता वा ध्रुवम् ॥ ५० ॥ चंद्रेशस्त-नुपोऽथवाष्टमपतिर्लग्नव्ययांगाष्टमः कुर्य्यान्मृत्युरुं-जार्तिभीतिकलहान् जन्मेशमुन्थाधिपौ ॥ लग्ना-च्चाष्टमगौ रुजार्तिजननौ दृष्टेक्षितौ मृत्युदौ लग्नेशो यदि चास्तगस्तनुगतच्छिद्राधिपो रिष्टदः ॥ ५१ ॥ रंध्रेशोऽथ विलग्नपो यदि विधौ लग्नाद्व्ययाष्टारितश्चेत्सौम्यैरवलोकितो नि-धनकृन्मुन्थाधिपो वा तथा ॥ एते रिष्टकरा बुधैर्निगदिता योगाः स्वशास्त्रोद्भवा अन्ये ताजि-कशास्त्रतो निजधिया ज्ञेयाः समादौ सदा॥५२॥

चन्द्रेशस्तनुप इति – यत्र राशौ चंद्रो भवति तस्येशः स्वामी शेषं स्पष्टम् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥

कुर्वन्ति तदा राज्यं कष्टं कुर्वन्ति देहिनाम्
॥ ६३ ॥ इति राजयोगभङ्गाध्यायः ॥

## अथ मिश्रभावफलाध्यायः ॥

लग्नादिभावा निजनाथयुक्ता दृष्टाश्च तेषां प्रवदन्ति वृद्धिम् ॥ सौम्यैश्च तैः पापखगैर्विनाशं खेवं विमिश्राः फलमिश्रदाश्च ॥ ६४ ॥ गगनशत्रुपराक्रमलाभगः खलखगो धनसौख्यजयप्रदः ॥ मदनरंध्रसुखांत्यविलग्नगो विविधकष्टभयार्त्तिकरः परः ६५ दिनपतिः सुतधर्मधनस्थितो निधिसुतार्थसुहृत्क्षयकारकः ॥ सहजवित्तसुतादिगतः शशी विविधसौख्यकरो धनदः स्मृतः ॥ ६६ ॥ निधनलग्नमदांत्यरिपुस्थितो यदि विधुः खलु खेटसुतेक्षितः ॥ यमकरे निदधाति नरं तदा यदि न पश्यति देवगुरुर्भृशम् ॥६७॥ हिबुकगो हृदि रोगकफार्त्तिकृद्धनविलासकरो गगने विधुः ॥ हरति पुण्यगतो मतिसञ्चयं व्ययगतः खलु दैन्यकरो नृणाम् ॥ ६८ ॥ तनुसुखास्तगतः क्षितिनन्दनस्तनुभृतां च तनौ तनुते व्यथाम् ॥ निधनगे निधनं व्ययगे व्ययो भवति शेषगृहेषु धनप्रदः॥६९॥धनशुभर्क्षगतो वसुहृत्कुजः सुतगतः सुतवित्तविनाशनः॥ शशिसुतो व्ययरंध्ररिपुस्थितो धनसुखार्थहरो भयदो भृशम् ॥ ७० ॥ सहजकेंद्रधनाङ्क-

सुतस्थितो धनविलाससुखादिकरो बुधः॥ भवगतश्च शुभः खचरैस्तदा बलयुतैः सहितो निधिदो मतः ॥ ७१ ॥ धनभवात्मजकेन्द्रनवत्रिगः सुरगुरुः सकलार्थसुखप्रदः ॥ निधनगस्तनुपीडनकारको धनसुखार्थहरो व्ययशत्रुगः ॥ ७२ ॥ भृगुसुतो व्ययवैरिविनाशगो भवति चेद्व्ययवैरिविरोधकृत् ॥ यदि च शेषगृहेषु सुखार्थदो धनचयं विदधाति सुखप्रदः ॥ ७३ ॥ व्ययाष्टलग्नास्तगतोऽर्कपुत्रो वपोगमे वित्तसुखप्रणाशम् ॥ करोति पञ्चोपगतः स्वपुत्रैर्वैरं सुखार्थक्षयकृच्चतुर्थे ॥ ७४ ॥ मन्दोऽन्दलग्नात्त्रिपडायवर्त्ती करोति नूनं सकलार्थलाभम् ॥ वित्तक्षयं वित्तगतोऽङ्कसंस्थः पापोदयं कर्मगतोऽर्थनाशनम् ॥ ७५ ॥ इति सामान्यभावफलानि ॥ यदि सुरेशगुरुस्तनुगस्त्रिगः प्रसवलग्नपतिर्हिबुकाश्रितः॥ परिविजित्य रिपोर्जनसञ्चयं धनचयं प्रकरोति गजादिकम् ॥ ७६ ॥ मदनपस्तनुपस्तनुगो गुरुर्यदि खलैः सहितो न च वीक्षितः॥ भवति चात्रधनं बहुलं तदा मदपतित्वमिदं विपुलं क्षितौ ॥ ७७ ॥ वनपतिः कुरुते धनगो धनं यदि सुराधिपतीज्यसमन्वितः ॥ सुतगतः सुतपः सबलो यदा सुतसुखं बहुलं तनुते तदा ॥

कुर्वन्ति तदा राज्यं कष्टं कुर्वन्ति देहिनाम्
॥ ६३ ॥ इति राजयोगभङ्गाध्यायः ॥

## अथ मिश्रभावफलाध्यायः ॥

लग्नादिभावा निजनाथयुक्ता दृष्टाश्च तेषां भवद-
न्ति वृद्धिम् ॥ सौम्यैश्च तैः पापखगैर्विनाशं ह्येवं
विमिश्राः फलमिश्रदाश्च ॥ ६४ ॥ गगनशत्रु-
पराक्रमलाभगः खलखगो धनसौख्यजयप्रदः ॥
मदनरंध्रसुखांत्यविलग्नगो विविधकष्टभयार्त्तिकरः
परः ६५ दिनपतिः सुतधर्मधनस्थितो निधिसुता-
र्थसुहृत्क्षयकारकः ॥ सहजवित्तसुतांतिगतः शशी
विविधसौख्यकरो धनदः स्मृतः ॥ ६६ ॥ निध-
नलग्नमदांत्यरिपुस्थितो यदि विधुः खलु खेटसुते-
क्षितः ॥ यमकरे निदधाति नरं तदा यदि न प-
श्यति देवगुरुर्भृशम्॥६७॥ हिबुकगो हृदि रोगक-
फार्त्तिकृद्धनविलासकरो गगने विधुः ॥ हरति
पुण्यगतो मतिसञ्चयं व्ययगतः खलु दैन्यकरो नृ-
णाम् ॥ ६८ ॥ तनुसुखास्तगतः क्षितिनन्दनस्त-
नुभृतां च तनौ तनुते व्यथाम् ॥ निधनगे निधनं
व्ययगे व्ययो भवति शेषगृहेषु धनप्रदः॥६९॥धन-
शुभर्क्षगतो वसुहृत्कुजः सुतगतः सुतवित्तविना-
शनः॥ शशिसुतो व्ययरंध्ररिपुस्थितो धनसुखार्थ-
हरो भयदो भृशम् ॥ ७० ॥ सहजकेंद्रधनाङ्क-

सुतस्थितो धनविलाससुखादिकरो बुधः॥ भवगतश्च शुभः खचरैस्तदा बलयुतैः सहितो निधिदो मतः ॥ ७१ ॥ धनभवात्मजकेन्द्रनवत्रिगः सुरगुरुः सकलार्थसुखप्रदः ॥ निधनगस्तनुपीडनकारको धनसुखार्थहरो व्ययशत्रुगः ॥ ७२ ॥ भृगुसुतो व्ययवैरिविनाशगो भवति चेद्व्ययवैरिविरोधकृत् ॥ यदि च शेषगृहेषु सुखार्थदो धनचयं विदधाति सुखप्रदः ॥ ७३ ॥ व्ययाष्टलग्नास्तगतोऽर्कपुत्रो वपागमे वित्तसुखप्रणाशम् ॥ करोति पश्चोपगतः स्वपुत्रैर्वैरं सुखार्थक्षयकृच्चतुर्थे ॥ ७४ ॥ मन्दोऽब्दलग्नात्त्रिषडायवर्ती करोति नूनं सकलार्थलाभम् ॥ वित्तक्षयं वित्तगतोऽङ्गसंस्थः पापोदयं कर्मगतोऽर्थनाशनम् ॥ ७५ ॥ इति सामान्यभावफलानि ॥ यदि सुरेशगुरुस्तनुगस्त्रिगः प्रसवलग्नपतिर्हिबुकाश्रितः ॥ परिविजित्य रिपोर्जनसञ्चयं धनचयं प्रकरोति गजादिकम् ॥ ७६ ॥ मदनपस्तनुपस्तनुगो गुरुर्यदि खलैः सहितो न च वीक्षितः ॥ भवति चात्रधनं बहुलं तदा मदपतित्वमिदं विपुलं क्षितौ ॥ ७७ ॥ वनपतिः कुरुते धनगो धनं यदि सुराधिपतीज्यसमन्वितः ॥ सुतगलः सुतपः सबलो यदा सुतसुखं बहुलं तनुते तदा ॥ ७८ ॥

गुरुसितौ यदि चास्तमुपागतौ हिमरुचिर्यदि नीचमुपागतः ॥ तनुभृतां तनुते विपदं तनौ मरणमत्र वियोगकरं परम् ॥ ७९ ॥ निधनभावगतस्तनुनायको यदि कुजेन युतोऽर्थविलोकितः ॥ खलु तनौ कफवातमरुद्व्यथां बहुव्यथां तनुतेऽत्र महद्भयम् ॥ ८० ॥ मदपतिर्मदगः सबलो यदा खलखगैः सहितेन च वीक्षितः ॥ मुनिवरैर्गदितं बहुलं सुखं युवतिवर्गभवं विविधं तदा ॥ ८१ ॥ लग्नं यदा दुष्टखगैः समेतं सौम्यग्रहैर्नो सहितं च दृष्टम् ॥ प्राप्नोति मद्यं बहुलं च मांसं तदा विवादं कुजनैर्नराणाम् ॥ ८२ ॥ वेश्यानुरागी मदपे विनष्टे दुष्टान्विते स्यात्परकार्यकामिः ॥ नष्टे विदग्धे खलखेटयुक्ते धर्माधिपे ज्ञानविपर्ययः स्यात् ॥ ८३ ॥ मंदान्वितो रात्रिपतिर्व्ययस्थो देवार्चितः षष्ठगतो विलग्नात् ॥ सौम्यार्थनाशं प्रकरोति शीघ्रं भूपादथो चौरजनाच्च दुष्टात् ॥ ८४ ॥ मुथान्दभुक्त रंध्रसमाङ्गनाथा नास्तंगता वीर्ययुतास्तदाऽब्दम् ॥ रम्यं सुखार्थागमनं विलासं कुर्वंति ते व्यस्तगताश्च व्यस्तम् ॥ ८५ ॥ त्रिकोणकेन्द्रादिगतेऽब्दनाथे सौम्ये च रम्यं सकलं तदाब्दम् ॥ षडष्टरिष्फोपगते विवीर्ये कष्टप्रदं तद्गदितं मुनीन्द्रैः ॥ ८६ ॥ अथ समाधि-

पतौ त्रिपडायगे खलखगैः सकलं सबले शुभम् ॥
व्ययविनाशगते विबले तदा न च शुभं गदितं
मुनिभिर्नृणाम् ॥ ८७ ॥ मुंथाधिपो व्ययरसाष्ट-
गतो विवीर्यो दुष्टग्रहस्त्वशुभवर्गगतोऽब्दकाले ॥
कष्टं नृणां परिकरोति व्ययं विवादं लोकैस्तथा
निजजनैः कलहं नितांतम् ॥ ८८ ॥ सौम्यग्रहै-
रुपचयोपगतैः समस्तैर्लग्नात्तथा निशिपतेः सक-
लैर्नराणाम् ॥ दद्युर्धनानि विविधानि विलास-
हास्यं सौम्यागमं निखिललोकजनात्पृथिव्याम्
॥ ८९ ॥ इति ताजिकसारे मिश्रफलाध्यायः ॥

## अथ द्वादशभावफलम् ॥

लग्नाधिपे पूर्णबलेऽतिसौम्यमारोग्यताकांतिविव-
र्धनं च ॥ दुःखं भवेन्मध्यबले विनष्टे कष्टं व्यया-
ष्टारिगतेऽल्पसौख्यम् ॥ ९० ॥ केन्द्रस्थिते लग्न-
पतौ च सौम्यैर्दृष्टे युते वा नवपंचमस्थे ॥ सौख्यं
विलासं विजयं भवेद्वा कम्बूलगे रात्रिपतौ ब-
लाढ्ये ॥ ९१ ॥ इति तनुभावफलम् ॥

कम्बूलगे रात्रिपतौ बलाढ्य इति—वामने तु क्षे
शशिनि मुथशिले भवति शेषं स्पष्टम् । प्रथमभावः ॥ ९१

वित्तेश्वरे जन्मनि देवपूज्ये वर्षे धनस्थे धनलाभकृ-
त्स्यात् ॥ वर्षाधिनाथेन युतेक्षिते वा जीवेऽथवा
वर्षपतौ बलाढ्ये ॥ ९२ ॥

त्रिनेश्वरे इति— एवं त्रयो योगा ज्ञेयाः अथवा वर्षाधिनाथेनेति— जीवे गुरौ वर्षे बलाढ्ये। धनलाभः उक्तं च—यदा वर्षाधिपत्यं च सबलत्वं च बिभ्रति॥ धना-र्तिर्महती तत्र वर्षे भवति निश्चयात्॥ १॥ ॥ ९२॥

एवंविधे भार्गवजेऽथवा ह्रि धनं तदा स्याद्बहुलं विचित्रम्॥ बलान्विते वित्तपतौ धनाप्तिर्हानि-र्बलाढ्ये विचले च नाथे॥९३॥ पापार्दिते देवगुरौ द्वितीये रंध्रेऽथवा भूपभयं तदा स्यात्॥ यत्र स्थितो देवगुरुस्तदङ्गे तत्र स्थितेऽब्दे धनलाभमत्र॥ ९४॥ इति धनभावफलम्॥

एवंविधे इति——एवंविधे गुरुवत् बुधे शुक्रे सति धनं॥ यत्र स्थितो देवगुरुरिति— एवं लग्ने जन्मलग्ने यस्मिन्राशौ गुरुर्भवति वर्षे तस्मिन्नेव राशौ गुरौ सति धनलाभः। उक्तंच— गुरुजन्मनि यद्राशौ तद्राशौ वर्षलग्नगे॥ जायते वित्तनीरुका शुभस्वामियुतेक्षिते॥ १॥ योगांतरमन्यत्रग्रंथात्—जन्मन्यर्के लग्नगते धनस्थे चेद्धनं भवेत्॥ शनौ धनगतेऽब्दे च धार्यहानिर्धनव्ययः॥ २॥ योगे लग्नेशवित्तेशौ वित्तसौख्यं प्रजायते॥ वित्ताशाद्व्ययगे लग्नाधीशे कष्टाद्धनं भवेत्॥ ३॥ इति धनभावः॥ ९३॥ ९४॥

वर्षाधिपेऽर्के सबले त्रिसंस्थे लाभस्थिते वा सहजाच्च सौख्यम्॥ शुक्रे तथैवं प्रकटार्थनाशं दग्धेऽस्तगे क्रूरयुतेक्षिते वा॥ ९५॥ सहोत्थगे

देवगुरौ सहोत्थात्सौख्यं तदांशे सबले त्रिगे वा ॥
सहोत्थसद्माधिपतौ बलिष्ठे नास्तंगते विक्रम-
गेऽथवा स्यात् ॥ ९६ ॥ सहोत्थगेऽब्जे सकुजे
त्रिसंस्थे वैरं कुजस्थानगतेऽर्कपुत्रे ॥ मांद्यं रवि-
स्थानगते महीजे भयं च दौस्थ्यं सहसंभवा-
नाम् ॥ ९७ ॥ वर्षेऽथवा जन्मनि वीर्ययुक्ते शुक्रे
विधुस्थानगतेऽनुजानाम् ॥ वृद्धिः प्रवाच्या च
कब्लमे वा हानिस्तथा मूसरिफे खलैर्वा ॥९८॥
इति सहजभावफलम् ॥

शुक्रे तुर्थेवमिति सूर्यवत् ॥ शुक्रेऽपि सहजसुखं । अस्मिन् शुक्रे सूर्ये वा क्रूरयुतेक्षिते दग्धेऽस्तगे शकटादर्थनाशः । सहोत्थगे इति भ्रातृसहमेशे इति सहोत्थगे इति चन्द्रभौमयुते तृतीयस्थे सहोत्थगे भ्रातृतो वैरं कुजस्थानगते स्थानशब्देन सर्वत्राऽत्र यद्राशिगो . व्योमचर इत्यादिना वक्ष्यमाणं पदं ज्ञेयम् ॥ कम्बूलगे इति—कम्बूलगे चन्द्रे वा पुनः खलैः क्रूरग्रहे सहमूसरीफे चन्द्रे शेषं स्पष्टम् ॥ उक्तं च—कुजयुतचंद्रे सहजे व्याकुलता भ्रातृनस्तस्य । मंदे भौमस्थाने भ्रातुर्मांद्यं च दौस्थ्यमनयोस्तु । व्यत्याशाद्वृद्धिः स्याद्बंधुवर्गे च ॥ २ ॥ जन्मनि वर्षेऽथवा बुधे अधिकारिणि सोदरेषु वृद्धिः। एवं च स्थिते जीवे भ्रातृसुखं बांधवैः प्रीतिम् ॥ ३ ॥ भ्रातृसुखं स्थिरशब्दनायपुर्वं सहजेश्वरे ॥ इति सहजभावः ॥९५॥ ॥ ९६ ॥ ९७ ॥ ९८ ॥

तुर्यस्थिते चंद्रयुते दिनेशे पापेक्षिते स्याद्सुखं हि
पित्रोः ॥ सुखस्थिते तूर्यपतौ बलाढ्ये सुखस्य

सुखाधिपतौ तथैव ॥ ९९ ॥ सौरी रविस्थानगते विवादं पित्रा च दात्रीशपदे जनन्याः ॥ भयं भवेत्क्रूरहतेऽथ नष्टे सुखाधिपे वा स्वसमाधिपे वा ॥२००॥ यत्स्थानगो जन्मनि रात्रिनाथस्तत्स्थःशनिर्मातृभयं करोति॥यद्राशिगो व्योमचरः स चाङ्के तद्वं भवेत्तस्य पदं खगस्य ॥२०१॥ इति सुखभवनफलम् ॥

पित्रोरिति— मातापित्रोः स्वसमाधिपेतौ सुखसहमेशौ स्थानं पदं च वक्ष्यमाणसंज्ञं ज्ञेयं। तदेवाह यद्राशिग इति ॥ यचाङ्के जन्मलग्ने यस्मिन्राशौ यो ग्रहो भवति तद्व स राशिस्तस्य खगस्य ग्रहस्य पद् अपरं नाम स्थानं इति ज्ञेय यो-गान्तरग्रंथात् । जन्मनि सूर्यस्थानिनि द्वन्वे वर्षे च मातृपित्रोः कष्टं । जन्माब्दे सूर्यरविः स्थाने कुजमंदयोश्चैव न जन्मनाथयुवे सूर्यस्वरे पित्रोः शुभं । शेषं सुगमम् । इति सुखभावः॥२०१॥

वर्षेश्वरे देवगुरौ सुतस्थे लाभेऽथवा वीर्ययुते स्वपुत्रा । सौरस्यं रवौ वा शशिजे कुजे वाऽप्येवं विलोमाद्भवति प्रकृष्टम् ॥ २०२ ॥ दिवार्चितौ जन्मनि यत्र राशौ वर्षेशराशिर्यदि पंचमस्थे ॥ तत्र स्थिते वर्षपतौ बुधे वा भौमेऽथवा पुत्रसमुद्भवः स्यात्॥३॥ यद्राशिगो जन्मनि सूर्यपुत्रो वर्षे च तद्राशिमयं विलग्नम् ॥ सन्तानकष्टं च कुजः सुतस्थो विलोमगः पुत्रहरो निरुक्तः ॥ ४ ॥ सन्तानसद्माधिपतौ बलिष्ठे तत्रोपगे पुत्रसुखं

प्रवाच्यम्॥ क्रूरार्दिते चास्तगते विनाशे देहोद्भवानां स्वदशाप्रवेशे ॥ ५ ॥ इति पंचमभावफलम् ॥

सौख्यं स्वाविति—गुरुवत् रवौ वा बुधे वा भौमे स्वपुत्रात् सुखं, तत्र स्थिते वर्षपताविति वा विकल्पार्थत्वात्। उक्तं च—वर्षपतौ सुतसहमे शुभदृष्टेऽपत्यसंतोषः। जन्मगजीवस्थाने वर्षे तत्रागतेऽत्र सुतसौख्यम् ॥१॥ एवंविधे शनौ स्यात् अपत्यता दौरस्थ्यहानिरुपायः योगान्तरं च मन्देऽब्दे पुत्रपतौ मदस्थे सेऽधिकारिणि भानिः ॥ लग्नपुत्रेश्वरः पुत्रे शुक्रो चंद्रोऽथवा गुरुः ॥ पुत्रदः पुत्रभवनं पश्यंद्ग्रहो यदि ॥ स्वोच्चं प्रयाति त्वरितं पुत्रांस्तिस्तु तदा भवेदिति। शेषं स्पष्टम् ॥ इतिपंचमो भावः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

मंदे वर्षपतौ विलोमगतिगे स्यात्सन्निपातो महान् रक्तार्तिश्च दशोपगे तनुभृतां पीडाज्वरः स्याद्ध्रुवम् ॥ एवं देवगुरौ बलेन रहिते वातार्तिकृद्भूमिजे पित्तार्तिस्तपनात्मजे हि सततं हृत्कृच्छ्रकृत्षष्ठगे ॥ ६ ॥ एवं रवौ षष्ठगतेऽक्षिरोगं व्ययस्थिते मृत्युभयं च शुक्रे ॥ एवं नराशोपगतेऽरिसंस्थे श्लेष्मार्त्तिकृत् श्लेष्मविकारकश्चेत् ॥ ॥ ७ ॥ सूर्यात्मजो जन्मनि यत्र राशौ स्थितस्तदाब्दे स भवेद्विलग्नम् ॥ शीतोष्णरुक्षाशनिनापि दृष्टे पित्तार्तिकृन्मन्दवदत्र भौमे ॥ ८ ॥ रन्ध्रस्थिते देवगुरौ सपापे भौमे विलग्ने सविधौ च मूर्च्छा ॥ तंद्राऽथवा सप्तमगे च राहौ

भवेद्भयं रोगभयं विचित्रम् ॥ ९ ॥ पापग्रहे जन्मनि केंद्रसंस्थे वर्षे विलग्ने त्वशुभं रुगुत्थम् ॥ शुभास्तत्रन्थोपगताकजेन युक्ताऽथ शूलं परिणामजं स्यात् ॥ १० ॥ दैत्येज्यदेवेज्यपदे महीजे चास्तं गते शीतरुकाक्षिरोगात् ॥ शीतोष्णरोगांश्च बुधेन्दुयुक्ते तत्स्थानगे कंवरुजादिकांश्च ॥ ११ ॥ जन्माङ्गपः षष्ठगतो विवीर्यः पापान्वितः शत्रुयुतोऽस्तगो वा ॥ करोतु तज्जातुभवान् विकारान् रुग्लग्नपो वा तनुपस्तथा वा ॥ १२ ॥ इति षष्ठभावफलम् ॥

मंदे षर्पपताविति—स्वदेशोपगे दशायामिति स्वदशानुपगच्छतोति स्वदशोपगस्तस्मिन्नेवमिति शनिवत् गुरौ वातोद्भवाः पीडाः । एवं शनिवद्भौमे पित्तार्तिरक्तमकोपश्च विशेषं सामान्यतः षष्ठगस्तपनात्मजो शनिर्दव्शूलकृत् । उक्तंच समरसिंहेन । मंदेऽष्टदेशे वक्रे पतिते स्युः सन्निपातरकरुजः ॥ षष्ठस्थिते नु विषमज्वरशूलकगुल्मभीयानि॥ वामने तु॥ शनौ. जन्मविलग्नेशे वर्षे पत्रिणि षष्ठगे ॥ त्रिदोषपीडा ॥ एवमिति— शनिवद्भौ षष्ठगेऽक्षिरोगं व्ययस्थे मृत्युभयं । एवं शनिवत् । शुक्रे नृराशिगे षष्ठस्थे षष्ठस्वामियुतेक्षिते श्लेष्मा । उक्तंच—सूर्येऽप्येवं षष्ठे पित्ताक्षिरोगोन्यगे नु मृत्युभयम् ॥ शुक्रेऽप्येवं षष्ठे नरराशौ स्वामिवीक्षिते श्लेष्मा ॥ १ ॥ तुलामिथुनकन्याकुंभा नरराशयः । स भवेद्दित्व इति—राशिवंर्षटस्रगतो भवति शनिना दृष्टे लग्ने शीतोष्णरुक्षरोगा शनिवद्भौमः पित्तार्तिदत् ।

रन्ध्रे स्थित इति—गुरौ सकोरेऽष्टमस्थो भौमे सचंद्रे लग्नस्थेऽस्मिन्योगद्वये मूर्च्छा तंद्राऽऽलस्यं। पापग्रह इति—यः पापग्रहो जन्मनि केंद्रस्थः स वर्षे विलग्नगः। बुधेन्दुयुक्ते इति—जीवशुक्रस्थाने चन्द्रयुते केवरुजादिका। रोगायोगान्तरे च—शुक्रस्थाने सूर्ये पतिते गदः स्मरव्यसनः षष्ठेशो वर्षभुजालग्नभुजा वायमुथशिलरोगः॥ षष्ठाधिपे शुभे षष्ठस्थिते प्रातिः स्त्रियो भवेत् कन्या तुलामिथुनेषु षष्ठशुक्रो षष्ठोऽद्यो भवेत् स्त्रियः प्रातिरिति। स्त्रीतो रोगप्रातिरित्यर्थः॥ जन्माङ्गपः षष्ठगत इति—जन्मलग्नपः जन्मलग्नस्वामी षष्ठभवनगत इति रुक्—लग्नपो रोगसहमेशो वा तनुपो वर्षलग्नेशस्तथा च जन्मलग्नेशश्चद्रोगकरः। चन्द्रबुधयोर्योगे भगन्दरः कुष्ठगण्डमालाद्याः राश्यंशभुक्तिपानाद्रोगस्थानानि वाच्यानि इति षष्ठोभावः॥६॥
॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

वर्षेशे भृगुजे च सप्तमगते स्त्रीतोऽतिसौख्यं भवेत्॥
नाकेशार्चितवीक्षितेऽर्थं बहुलं भौमे रतिर्वं मिथः॥
शीलघ्न्यायुतवीक्षिते च रविजे स्याद्वृद्धजायारतिः
संयुक्ते सुरपूजिते नववधूप्राप्तिश्च सद्वंशजा ॥१३॥
जन्माङ्गपे सप्तमगेऽन्दलग्नादीर्यान्विते स्यात्खलु
दारसौख्यम्॥ शुक्रास्पदे लग्नगते विवाहो वा वीर्ययुक्ते च विवाहगेहे ॥ १४ ॥ सौम्यो भृगुस्थानगतोऽङ्गनानां सौख्यं विलासं व्यसनं करोति ॥
स्त्रीलग्ननाथः सबलोऽस्तसंस्थस्तथा तपो वा
विविधैः प्रकारैः ॥ १५ ॥ इति जायाभावफलम्॥

वर्षेश भृगुजे इति—शुक्रे वर्षेश सप्तमभावस्थे भौमेरविः ? अर्थवशाद्विभक्तिविपरिणाम इति ? अत्र सर्वत्र सप्तमीस्थाने तृतीया । भौमेन दृष्टे मिथो रविः । बुधेन दृष्टे वा लब्ध्या स्त्रिया सह जारता स्यात् शनिना युतवीक्षिते वृद्धयासह जारता स्यात् । गुरुणा युते नववधूप्राप्तिः । उक्तं च— शुक्रवर्षेश्वरेऽस्तस्थे सौख्यं स्त्रीपक्षतो भवेत् ॥ सर्वे शेषे गुरुदृशा कुजदृष्ट्या मिथो रविः ॥ बुधे युक्तेक्षिते तस्मिन् लब्ध्या भवति जारता ॥१३॥ शुक्रास्पदे इति——शुक्रस्थाने वर्षलग्ने विवाहः । अत्र सामान्यतो लग्नग्रहणं कृतं परं सप्तमे लग्ने । उक्तं च——शुक्रो जन्मनि यद्राशौ वर्षे लग्नेश्वरो यदि ॥ तद्राशौ सप्तमो वर्षराशेः परिणयस्तदेति ॥ १४ ॥ भौमो-भृगुस्थानगत इति——सौम्य इति च पाठः । उक्तं च—— शुक्रस्थाने भौमे व्यसनं बहुविलाससुखहर्षः॥ जन्मपतौ वर्षेशे हर्षस्थसितेन संयुते वापि ॥१॥ योगान्तरं——लग्नास्तनाथयो-र्योगे विवाहादिः प्रजायते इति सप्तम भावः ॥१३॥१४॥१५॥

वर्षेशे क्षितिजे बलेन रहिते घातो नराणां भवेत्
वह्निर्भीः खलु वह्निभे विपदतोऽरिष्टं नृपाच्चौरतः ॥
रन्ध्रेशे तनुपे न चेन्मुथशिले नाशः कुजाब्जेऽब्दपे
मृत्युस्थेऽपि तथा कुजेऽब्दभगते चन्द्रान्विते
मृत्युकृत् ॥ १५ ॥ सार्के बुधे भौमयुते मृतिः
स्याद्देशान्तरे वा वधबन्धनं च ॥ तद्वच्छनौ
व्योमगते प्रपीडा वह्नयुद्भवा वायुसमुद्भवा वा १६॥
कुजे तथा सूर्ययुते प्रवासः स्याद्वाहनाद्भौमपदे
हिमांशौ ॥ दुःखं नृपाद्वा खगतेऽर्कपुत्रे लोहाद्भयं

चेदधिकारिणि स्यात् ॥१७॥ विनाशलग्नाधिपतिर्मूर्तिस्थो विनाशलग्नात्मकरोति नाशम् ॥ जन्माष्टमेशौ व्ययषष्ठरन्ध्रस्थितौ विलासादिबलौ च तद्वत् ॥ १८ ॥ इत्यष्टमभावः ॥

भौमपदे तदापि नृपाद्दुःखं। उक्तं च—भौमस्थाने चन्द्रेऽधिकृते दुःखं नृपाद्भयं गुप्तम् ॥ गगने शनावधिकारिणि लोहतो भवति पीडा ॥ १ ॥ रवियुते कुजे नृपभीरिति ॥ ॥ १५ ॥ १६ ॥ १७ ॥ विनाशलग्नाधिपतिर्मूर्तिस्थ इति— विनाशलग्नात् मृत्युसहमात् . मृत्युसहमेशोऽष्टमस्थो नाशं मृत्युं करोति। तद्वदिति । मृत्युयोगान्तराणि- "भौमो जन्मनि पद्माशौ वर्षलग्नेशकेन्द्रगः। वर्षेशश्च बुधस्तत्र तदा वर्षं न शोभनम् ॥ १ ॥ शनियुक्ते कुजे खस्थे १० वाहनात्पतनं भवेत् ॥ मृत्यौ भौमेऽग्निभयं नृपतोऽन्विष्टापहारिकष्टायम् ॥२॥ आकाशगते चास्मिन् चतुष्पदेभ्यो भवति पीडा ॥ अस्तगशनौ संकटं वा दुर्वचनभर्त्सनादि स्युः ॥ ३ ॥ क्रूरहतेज्ये लग्ने दग्धविनष्टे कलत्रवादाः॥ सौम्यस्थाने चन्द्रेऽधिकृते वर्षे च जातके भवति ॥ वादो विदेशगमनं सर्वैरपि वैमनस्यं च ॥ ४ ॥ इत्यष्टमभावः ॥ १८ ॥

त्रिधर्मगे भूमिसुतेऽब्दनाथे सौम्यग्रहैर्युक्तनिरीक्षिते च ॥ मार्गाद्रुते वर्षपतौ कवूले धर्मत्रिगेऽर्के च यथोक्तमः स्यात् ॥ १९ ॥ निध्धश्विगे दैत्यगुरौ समेशे मार्गे सुखं स्यात्कुगतिर्विवीर्ये ॥ एवंविधे तारकराजपुत्रे तीर्थे गतिः स्यान्मरणं विलोमम् ॥ २० ॥ धर्माधिपे लग्नपतेश्च योगे गतिस्त्वक्-

स्माच्च शनौ शुभस्थे ॥ वियोगतः स्याद्गमनं न शस्तमेवं गुरौ दूरगतिस्ततश्च ॥२१॥ केन्द्रस्थिते भूमिसुतेऽब्दनाथे दूरे गतिः स्यान्निजबन्धुवर्गात् ॥ धर्माधिपे पूर्णबले सुखं च मार्गे नराणां हि शुभस्थिते वा ॥ २२ ॥ धर्मास्त्यसद्माधिपतौ बलिष्ठे तत्र स्थिते मार्गपदाश्रिते वा ॥ मार्गे सुखं स्याद्बहुळं नराणां कष्टं खलैः संनिहिते विवीर्ये ॥२३॥ इति धर्मभावफलम् ॥

त्रिधर्मेति— अर्के मूर्थे कंबूलगे इति— वर्षेशे कंबूले रवौ तृतीयनवमे च मार्गगतिरित्युक्तं च॥१९॥ निष्पन्नेति—शुक्रे वर्षेशे निष्पन्नेने नवमतृतीयगे विवीर्ये इति— वक्रीतेऽस्तगते इत्यर्थः । शनौ शुभस्थे एवमिति शनिवम् ॥ मार्गे नराणां शुभस्थिते नवमस्थिते वा वक्रस्थे मार्गपदाश्रिते नवमभावस्थे वा भौमेऽत्र गुरुस्थाने शुभगमनं तत्र मुग्धुलाभः स्यात् । इति नवमभावः ॥२०॥२१॥२२॥२३॥

वीर्याढ्ये खगतेऽब्दपे निजकुले स्यात्कीर्त्तिराज्योदयस्त्वन्यत्केन्द्रगते च सौम्यसहिते स्थानान्तरात्तिर्नृणाम् ॥ एवं खसपतौ तु तुर्यभगते पूर्वाधिकारागमो मित्रत्वं क्षितिपेन वा शुभजनैर्लाभस्थिते वा ध्रुवम् ॥ २४ ॥

वीर्याढ्ये खगते इति—अब्दपे वर्षेशे साधारणतो विशेषमाह इति। एवं खसपतौ इति—वर्षेशे

चतुर्थस्थे पूर्वाधिकारागमः क्षितिपेन सह वा शुभजनैः सज्जनैः सह मित्रत्वं सौहार्दम् वा एकादशस्थे दशमस्थेऽपि च। उक्तं च-"एवं रवौ बलीयसि भूस्थे पूर्वार्जिताधिकाराप्तिः ॥ एकादशे नृपेण च मित्रत्वं प्रकृतिभिर्वापि"॥१॥ वामने तु-"वर्षेऽर्के चतुर्थे खे पूर्वाधिकृतिराप्यते" ॥ २४ ॥

सूर्ये सिंहगते हि जन्मसमये वर्षेबलाढये नृणाम् राज्याप्तिश्च विधौ कुजास्पदगते स्थानान्तरार्थागमम् ॥ नीचस्थे दिनपे नभःस्थलगते पापार्दिते बन्धनम् भूपाद्व्ययगते च लाभभगते लाभो महान् विद्यया ॥२५॥ समाधिनाथे स्वगृते बलिष्ठे सौम्यान्विते स्यात्खलु राज्यलाभः॥ कम्बूलगे कर्मपदाऽधिनाथे स्थानान्तराद्राज्यसुखागमः स्यात् ॥२६॥

सूर्ये सिंहगते इति—जन्मसमये सूर्ये सिंहस्थे वर्षे बलाढ्ये बलवति। उक्तं च—"जन्मनि सिंहगतेऽर्के वर्षे बलिनि प्रभोः पदप्राप्तिः" भौमस्थाने विधौ चन्द्रे ॥२५॥२६॥

यदीत्थशालं तनुपेन सार्द्धं कर्माधिनाथः प्रकरोति पुंसाम्॥ राज्यागमो मित्रसुखार्थलाभं वा रूपलग्नाधिपतौ बलिष्ठे ॥२७॥ इति कर्मभावफलम् ॥

यदीत्थशालं तनुपेनेति—कर्माधिनाथ इत्यत्र वर्षाधिनाथोऽपि ग्राह्यः। उक्तं च—"गगनलग्नपवर्षपतीनां योगे इत्थशालमुथशिले जाते ॥ नृपसद्मगेऽब्दनाथेऽपीत्थशाले नृपतियोगः ।१॥ मन्देऽब्दपेऽधिकारिणि सहजे धर्मप्रातनुवे ॥ दग्धविनष्टे

सदा स्वबन्धुसहमं सौम्याच्छशाङ्कं त्यजेत् रात्रौ वा दिवसे च लग्नसहितं सोद्वाहकं मन्दतः॥३७॥ त्याज्यो दैत्यगुरुर्विलग्नसहितो घस्रे क्षपायां तथा तूर्येशं तनुतस्त्यजेत्तनुयुतोऽजस्रं निधिः स्याद्दिवा॥ पुण्याद्भूमिसुतं त्यजेन्निशिगतो व्यस्तं च माहात्म्यकं पुण्यं देवगुरोस्त्यजेच्च दिवसे कीर्तिर्विलग्नान्वितम् ॥ ३८ ॥ व्यस्तं तत्खलु रात्रिगे हि सुमतिर्जीवात्स्वरांशुं त्यजेत् घस्रे लग्नयुतं भवेच्च नियुतं राशौ विलोमं हि तत् ॥ भृत्याख्यं शशिजं त्यजेन्निशिपतेर्घस्रे विलग्नान्वितं व्यस्तं रात्रिगते क्षमाशकटवज्ज्ञेयं प्रवीणैः सदा ॥ ३९ ॥ आशाभिधं दैत्यगुरोर्विशोध्यो मन्दो दिवा लग्नयुतं च रात्रौ॥ व्यस्तं गुरू रात्रिपतेः पतङ्गस्त्याज्योऽन्दलग्नेन युतः क्षपायाम् ॥ ४० ॥ व्यस्तं च पुण्याद्गुरुसद्मकं च मित्राह्वयं लग्नगतं च घस्रे ॥ व्यस्तं निशायां दिवसे निशायां सौरे विजीवं खलु भ्रातृसंज्ञम् ॥ ४१ ॥

अथ सहमानां विवरणं क्रियते ॥ अथाचार्येण कानिचित्सहमानि ताजिकसम्मतानि कानिचित्संज्ञातन्त्रधामनाद्विताजिकेभ्यो विपरीतान्युक्तानि तानि [illegible] तत्तु तएव जानन्ति परं मया तु ग्रन्थकार एव विज्ञप्यते तथापि भावकसम्मतान्येव सहमानि कार्याणि । नमस्कारश्चायं योऽत्र दिया एव सहमानयनप्रकारः सोऽन्यथा

जिके रात्रौ सहमानयनप्रकारो ज्ञातव्यः । योऽत्र रात्रौ सहमानयनप्रकारः सोऽन्यताजिकशास्त्रे दिवसे सहमानयनप्रकारो ज्ञातव्यः । यत्रानुक्तमिति कृतं भवति तत्सहमं संज्ञातन्त्रादिषु नोक्तमिति ज्ञेयम् । यत्र विपरीतमिति कृतं तत्सहमं संज्ञातन्त्रादिभ्यो विपरीतं ज्ञेयमिति विवेकः । पुण्यं स्यादिवसे इति—सोदाहरणव्याख्या—सहमप्रकरणे यत्र क्षेप उक्तस्तत्र क्षेपो योज्यः यत्र नोक्तस्तत्रानुक्तमपि लग्नं योज्यं ताजिके दृष्टत्वात् । अत्र दिवसे वर्षप्रवेशः तेन सूर्यात् ११।२६।४९चन्द्रः ०।१५।२७।५८शुद्धः ०।२३।५८।५५ लग्नेन ३।०।११।१ युतः ३।२४।९।५६ पुण्यसहमं १। रात्रौ रविश्चन्द्राच्छोध्यः लग्नयोज्यं १ इदं विपरीतं । स्वोच्चात् ०।१०।०।० रविः शुद्धः ११।९।२६।४६ शुद्धः ११।००।३३।१४ अनुक्तमपि लग्नं ३।०।११।१ युतं २।०।४४।१५ राज्यसहमं २। रात्रौ स्वोच्चाचन्द्रस्त्याज्यो लग्नं योज्यं विपरीतं पुण्यसहमा ३।२४।९।५६ दिवा रात्रावपि सदेत्यर्थः । नीचो बृहस्पतिः १०।७।५२।३२ शुद्धः ५।१६।१८।२४ लग्नयुते ८।१६।२९।२५ यशस्सहमं ३ विपरीतं । विपरीतं स्वदेशगं यशः भुक्ते तनुपदे देयं स्थाप्यं। यथात्र पुण्यसहमः भुक्तभागः ३।२४ तेन वर्षलग्ने कर्कराशौ पुण्यसहमं स्थाप्यम् । एवं सर्वाण्यपि सहमानि स्थाप्यानि । मिथुने राज्यसहमं धनुषि यशस्सहमं एवमग्रेवनान्यपि ज्ञेयानि। रवेः सदा शनिः ३।१९।५।११ शुद्धः९।२०।२६।३५ लग्नयुतं ४।०।५७।६ रिपुसहमं ९। ग्रन्थान्तरे जाड्यसहमं। रात्रौ व्यस्तं विपरीतं तनुपाज्ञौमं त्यजेत् अत्र तनुपाचन्द्रात् ०।१५ २७।५१ भौमः शुद्धः ९।२७।६।४८ लग्नयुतं ०।२७।१७।४९ ामर्थ्यसहमं १० रात्रौ व्यस्तं। यदि भौमो लग्नेशस्तदा भौ-ाद्बृहस्पतिः शोध्यः यदि लग्नेशस्तस्माद्भौमादाकपतिश्च दिन-

शशोर्युहं भाग्य गृहाच्च शोध्यं साङ्कं दिवा तत्र
यतुष्पदाख्यम् ॥ व्यस्तं क्षपायां रविजादिजद्या-
ओभे तदोध्रं दिवसे सलग्नम् ॥ ४६ ॥ सदाऽञ्जतो
देवगुरुं विजयाद् गलाढ्यं लग्नयुतं स्फुटं स्यात् ॥
गमागमे भास्करतोऽर्कपुत्रं दिवा त्यजेद्व्यस्तगतं
क्षपायाम् ॥ ४७ ॥ ततः सुमेधासहमं सुरेज्यादवि
हरेद्ग्नयुतं च पसे ॥ व्यस्तं तु रात्रौ कुपिजं तु
मन्दात् हरेच्चखेलग्नयुतं शुरात्रौ ॥ ४८ ॥ हक्कस-
यकं रात्रिपतेर्दिनेशं पसे त्यजेद्व्यस्तमतः क्षपा-
याम् ॥ पाताख्यकं देवगुरोर्विशोध्यं पुण्यं दिने
रात्रिगते विलोमम् ॥ ४९ ॥ भावो वा सहमं स्व-
नाथसहितं दृष्टं च तद्वृद्धिदं सौम्यैर्वा निजनाथ-
पाकविपर्ययैर्नाशोऽन्यथा स्यात्तयोः । पुण्ये वीर्य-
समन्विते बहुधनं चिन्त्यं विलासः सुखं हानिः

१२ । ५ । २१ - श्रद्धासहमं ३१ विपरीतं । पुण्यसहमाद्गुरुः शुद्धः ५ । १६ । १७ । २४ लग्नयुतं ८ । १६ । १० । २५. श्लसहमं ३२ रात्रौ व्यस्तं वर्ते वीर्यमनुक्तं । नवमभावस्वामिनोऽध गुरोः १० । ७ । ५२ । ३२ विपरीतं पुण्यसमाद्गुरुः शुद्धः ५ । १६ । १७ । २४ लग्नयुतं ८ । १६ । १० । २५ सदा नवमो भावः १० । २४ । २९ । २९ शुद्धः ११ । १३ । २३ । ३ लग्नयुतं २ । १३ । ३४ । ४ देशान्तरसहमं ३३ विपरीतं । चन्द्रात्सदा शनिः शुद्धः ८।२६।२७।४० षष्ठभावः ७।२७।२०।१५ युतः ४।२३।४२।५५ सन्तापसहमं ३४ विपरीतं । सन्तापजं रात्रिपतेर्विमन्दं पष्ठाद्विशोध्यमिति—पष्ठः पष्ठभावः विशोध्यमिति विशुद्धः क्षेपः इत्यर्थः॥ उक्तं च " चन्द्रं मन्दात्तु संशोध्य रिपुभावं च मेलयेदिति" पुण्यसहमाद्गुरुः सदा शुद्धः ५ । १६ । १७ । २४ भौमयुतः ८ । ४ । ३८ । २७ दुःखसहमं ३५ अनुक्तं चन्द्राद्भौमः ९ । २० । ६ । ४८ रविमुतः ११ । ६ । २३ । ३४ क्लेशसहमं ३६ रात्रौ व्यस्तं अनुक्तं । भौमाच्चन्द्रः शुद्धः २। २ । ५३ । १२ नवमभावो १० । २४ । २९ । २९ युतः० ।२७।२३ विज्ञानसहमं ३७ रात्रौ व्यस्तं अनुक्तं । मन्देन सदा लग्नं हीनं ११।११।५।५० लग्नयुतं २।११।१६।५१ व्यसनसहमं ३८ अनुक्तं । द्वादशभावा—११२७।२०।१५ त्पष्ठभावः ७।२७।२०।१५ शुद्धः ६।०।०।०लग्नयुतं ९।०।११।१ सप्तमभावो च शिष्टः चतुष्पदसहमं ३९ रात्रौ व्यस्तं अनुक्तं। शनेः भौमः शुद्धः १।०।४४।८ लग्नयुतं ४।०।५५।९ उष्ट्रसहमं ४० रात्रावनुक्तमपि व्यस्तं अनुक्तं । चन्द्रात्सदा गुरुः शुद्धः ९।७।३५।९ लग्नयुतं ५।७।४५।३० गजसहमं ४१।रवेः शनिः शुद्धः ६।२०।२३।३५ लग्नयुतं०।२०।३३।३६

४२ रात्रौ व्यस्तं। ग्रन्थान्तरे राज्यसहमं विपरीतं। बृहस्पतितो रविः शुद्धः ८।२८।२५।४६ लग्नयुतं ११।२८।३८।४७ सुमेधासहमं ४३ रात्रौ व्यस्तं अनुक्तं। शनेः सदा शुद्धः २।८। ४९।४८ लग्नयुतं ५।९।०।४९ कृषिसहमं ४४ ग्रन्थान्तरे स्त्रीविपरीतं गुरुसहममेव दिक्सहमं ४५। कीर्तिसहममेव धातुसहमं ४६। कानिचिदनुक्तान्यपि ग्रन्थान्तराल्लिख्यन्ते। दिने चन्द्रात् "स्वस्वामिना शुभखगैः सहितं च दृष्टं स्वामी बली च यदि तत्सहमस्य वृद्धिः॥ यत्स्वामिना शुभखगैश्च न युक्तदृष्टं तत्सम्भवो न हि भवेदिति चिन्त्यमादौ"॥ ॥ १ ॥ ग्रन्थान्तराल्लिखितमिदम्। शुक्रः शोध्यः लग्नयुतः मातृसहमं रात्रौ व्यस्तं ४७। इदमेव जलसहमं विद्यासहमात्सदा पुण्यसहमं दिने शनेश्चन्द्रः शोध्यौ लग्नयुतो रात्रौ व्यस्तं। पानीयपतनसहमं पुण्यसहमाच्छनिः शोध्यो लग्नयुक् बन्धनसहमं रात्रौ व्यस्तं। एवं यथोपयोगीन्यन्यान्यपि ज्ञेयानि, अथ सहमफलानि सुकराणि। विशेषश्चात्र-"सहमं सहमपश्च तयोर्विश्लेषसाधयेत्॥ अंशाद्येव मवर्त्तव्या वर्षोदये विभाजयेत्॥१॥ अन्तरे च कृते यैवं पदमं जायते खलु॥ तेनोदयेन सम्भक्तं वर्षोदयप्रमाणकैः ॥२॥ फलमंशादि पद्धत्यं तत्प्रोक्तं च दशो ततः॥ एवं कृते च तत् मासिरिति ज्ञेयं पुत्रेक्षिते ॥ ३॥ अन्यथा नैव वर्षार्थं मासं नैव समादिशेत्" ॥४२॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ इति सहमप्रकारः ॥

अथ त्रिकालबलम्॥

सतो वर्षविलग्नेशसमये पाकस्य कालोद्भवं ज्ञेयं तत्त्रिविधं बलं सुकृतिना वर्षेशपाकेशयोः ॥ तं

वीर्यं स्वधिया विमृश्य सकलं वाच्यं हि ज्योतिर्विदा यः खेटः सबलोऽब्दवेशसमये सूतौ दशायां तथा ॥ ५१ ॥ सर्वा तस्य शुभा दशा च कथिता सूतौ च यो वीर्यवान् वर्षे नष्टबलो दशासु नियतं मध्या तदीया दशा ॥ आद्यन्ते फलवर्जिता च सफला मध्ये हि सम्यग् दशा ज्ञेया व्यस्तफलप्रदा निजबलैर्व्यस्तैर्बुधैर्निश्चितम् ॥ ५२ ॥

अथ वर्षेशदशेशयोस्त्रिकालबलमाह ।

सूताविति—सूतौ जन्मसमये नष्टबलो वर्षे मध्यबलो दशासु श्रेष्ठबलस्तस्य दशा व्यस्तफला आद्यन्ते सफला मध्ये फलवर्जिता इति ॥ ५१ ॥ ५२ ॥

सूतौ यः सबलो दशासु च सगो मध्योऽब्दवेशे यदा पूर्वार्द्धे सफला दशा परदले प्रोक्ता बुधैर्निष्फला ॥ विज्ञेया बलव्यत्ययाद्गदितवद्व्यस्ता दशा सूरिभिर्योऽब्दे जन्मनि खेचरो हि सबलः पाके विवीर्यो यदा ॥ ५३ ॥ वीर्याढ्यः स्वदशास्ववीर्यरहितो वर्षे प्रसूतौ हि यो मध्योऽसौ कथितस्त्रिकालसमये दातुं क्षमः सत्फलम् ॥ वीर्यैस्त्रिविधैः खगैर्विरहितः सोऽनिष्टकृद्व्याधिदो ह्येवं सर्वदिवौकसां मुनिवरैर्ज्ञेयं त्रिकालोद्भवम् ॥ ५४ ॥ इति त्रिकालबलं सम्पूर्णम् ॥

सूतौ य- इति—सूतौ जन्मनि सबलो दशास्वपि सबलो वर्षे मध्यफल इति। शेषं स्पष्टं। बलव्यत्ययाद्गदितवदिति— सूतौ दशासु च मध्यबलो वर्षे सबलस्तस्य दशा गदितवद्गुक-वत् पूर्वार्द्धे सफलाऽपरदले निष्फला इत्यर्थः। व्यस्ता द-शा सूरिभिरिति—पूर्वार्द्धे निष्फला अपरदले सफला ऽ केत्यर्थः ॥ ५३ ॥ ५४ ॥

अथ सामान्यतो बलम् ॥

केन्द्रायत्रिनवेषु वित्तभगतो दृष्टः शुभैः संयुतः पा-पेक्षारहितो भवेद्बलयुतो नास्तं गतो मार्गगः ॥ सूर्यो मध्यदिने भवेद्बलयुतः शुक्रोऽर्द्धरात्रे. शनिः घस्रान्ते शशलाञ्छनोऽस्तसमये प्रातर्बुधो भूमिजः ॥ ५५ ॥ रात्र्यन्ते धिषणो सदा नृसचराः पुंरा-शिगा स्त्रीग्रहाः स्त्रीराशिभगता दिवाऽस्तसमये प्रो-क्ता नृनाथाह्वयाः ॥ स्वोच्चे मित्रगृहेऽथवा स्वभवने यातो बलिष्ठश्च यः सामान्यं हि बलं विशेषमधु-ना ज्ञेयं बुधैः शास्त्रतः ॥ ५६ ॥ इति सामान्यतो बलम् ॥ अथ निर्बलत्वम् ॥ रन्ध्रारिव्ययगोऽस्तगः स्वभवनात्सप्तस्थितो वक्रगः स्वोच्चादस्तगतः स्व-रांशुकिरणैर्भिन्नोऽस्तगो भास्करात् ॥ यो नीचां-शग इत्थशालरहितः क्रूरैसराफी खलैर्युक्तो वा विजितोऽरिभिर्गतबलो यो राहुपुच्छास्यगः ॥ ॥ ५७ ॥ इति ताजिके निर्बलत्वम् ॥ अथ नष्ट-

वीर्यम् ॥ पापैर्युक्तविलोकितश्च विजितो नीचा-
नुगोऽस्तानुगो नष्टोऽसौ खचरोऽधिकाररहितो यो
वैरियुक्तेक्षितः ॥ दत्तेऽसौ निखिलाङ्गदेहदमनं
दारादिसम्पीडनं वैरं वित्तविनाशनं निजदशा-
कालेऽथवाऽब्दे पुनः ॥५८॥ नष्टो घस्रपतीरिपो-
र्व्यसनकृत् त्वग्नेत्ररुक्कृच्छशी सौख्यार्थक्षयकृत्
कुजश्च लघुतावृद्धिं मतेर्नाशकृत् ॥ सौम्योऽर्थक्षय-
कृत्सुरेशसचिवो भोगार्थहानिं भृगुर्मृत्योर्भीतिकरः
शनिः खलु नृणां वर्षेषु पाके सदा ॥ ५९ ॥ इति
ताजिके नष्टवीर्यम् ॥ अथ चन्द्रनैर्बल्यम् ॥ वीर्ये
चान्द्रमसं बलं निगदितं सर्वत्र कार्ये बुधः तत्कृ-
त्स्नं सुधिया विमृश्य नियतं नैर्बल्यमत्रोच्यते ॥
स्वर्क्षात्सप्तगतः स्वनीचभगतो नीचेत्थशालानुगो
दुष्टेक्षासहितो युतः खलखगैर्नष्टेत्थशालोऽस्तगः
॥ ६० ॥ तुलान्ते दले वृश्चिकाद्ये च नष्टस्तमो-
वक्त्रपुच्छस्थितो द्वादशांशेः॥ विधुर्भान्तगो वैरि-
दृष्ट्या समेतो विनष्टस्त्वसौ तैर्विमुक्तो बलाढ्यः
॥ ६१ ॥ इति चन्द्रनैर्बल्यम् ॥

अथ सामान्यबलम् ॥ केन्द्रायत्रिनवेषु इति । पापेक्षार-
हितः क्रूरदृष्टिरहितः मास्तेगतो यो ग्रह इति।मध्याह्ने सूर्यो अर्द्ध-
रात्रे शुक्रः दिनान्ते शनिः अस्तकाले चन्द्रः प्रातर्बुधः भूमि-
जो रात्र्यन्ते धिषणो गुरुः सदा दिनेरात्रावपि बलवान् । “प-
ञ्चपञ्च ५५ उषः काठः सतपञ्चा ५७ दृणोदयः ॥ अष्टप-

सूतौ यः इति—सूतौ जन्मनि सबलो दशास्वपि सबलो वर्षे मध्यफल इति। शेषं स्पष्टं। वलव्यस्ययाद्गदितवदिति–सूतौ दशासु च मध्यवलो वर्षे सबलस्तस्य दशा गदितवदुक्तवत् पूर्वार्द्धे सफलाऽपरदले निष्फला इत्यर्थः। व्यस्ता दशा सूरिभिरिति—पूर्वार्द्धे निष्फला अपरदले सफला प्रोक्तेत्यर्थः ॥ ५३ ॥ ५४ ॥

अथ सामान्यतो बलम् ॥

केन्द्रायत्रिनवेषु वित्तभगतो दृष्टः शुभैः संयुतः पापेक्षारहितो भवेद्बलयुतो नास्तं गतो मार्गगः ॥ सूर्यो मध्यदिने भवेद्बलयुतः शुक्रोऽर्द्धरात्रे शनिः घस्रान्ते शशलाञ्छनोऽस्तसमये प्रातर्बुधो भूमिजः ॥ ५५ ॥ राज्यन्ते धिषणो सदा नृखचराः पुंराशिगा स्त्रीग्रहाः स्त्रीराशिमगता दिवाऽस्तसमये प्रोक्ता नृनार्याह्वयाः ॥ स्वोच्चे मित्रगृहेऽथवा स्वभवने यातो बलिष्ठश्च यः सामान्यं हि बलं विशेषमधुना ज्ञेयं बुधैः शास्त्रतः ॥ ५६ ॥ इति सामान्यतो बलम् ॥ अथ निर्बलत्वम् ॥ रन्ध्रारिव्ययगोऽस्तगः स्वभवनात्सप्तस्थितो वक्रगः स्वोच्चादस्तगतः स्वरांशुकिरणैर्भिन्नोऽस्तगो भास्करात् ॥ यो नीचांशग इत्थशालरहितः क्रूरेसराफी खलैर्युक्तो वा विजितोऽरिभिर्गतबलो यो राहुपुच्छास्यगः ॥ ॥ ५७ ॥ इति ताजिके निर्बलत्वम् ॥ अथ नष्ट-

वीर्यम् ॥ पापैर्युक्तविलोकितश्च विजितो नीचा-नुगोऽस्तानुगो नष्टोऽसौ खचरोऽधिकाररहितो यो वैरियुक्तेक्षितः ॥ दत्तेऽसौ निखिलाङ्गदेहदमनं दारादिसम्पीडनं वैरं वित्तविनाशनं निजदशा-कालेऽथवाऽब्दे पुनः ॥५८॥ नष्टो घस्रपतीरिपो-र्व्यसनकृत् त्वग्नेत्ररुक्कृच्छशी सौख्यार्थक्षयकृत् कुजश्च लघुतावृद्धिं मतेर्नाशकृत् ॥ सौम्योऽर्थक्षय-कृत्सुरेशसचिवो भोगार्थहानिं भृगुर्मृत्योर्भीतिकरः शनिः खलु नृणां वर्षेषु पाके सदा ॥ ५९ ॥ इति ताजिके नष्टवीर्यम् ॥ अथ चन्द्रनैर्बल्यम् ॥ वीर्यं चान्द्रमसं बलं निगदितं सर्वत्र कार्ये बुधः तत्क्ष-त्वं सुधिया विमृश्य नियतं नैर्बल्यमत्रोच्यते ॥ स्वर्क्षात्सप्तगतः स्वनीचभगतो नीचेत्थशालानुगो दुष्टेक्षासहितो युतः खलखगैर्नष्टेत्थशालोऽस्तगः ॥ ६० ॥ तुलान्ते दले वृश्चिकाद्ये च नष्टस्तमो-वक्त्रपुच्छस्थितो द्वादशांशैः॥ विधुर्मान्तगो वैरि-दृष्ट्या समेतो विनष्टस्त्वसौ तैर्विमुक्तो बलाढ्यः ॥ ६१ ॥ इति चन्द्रनैर्बल्यम् ॥

अथ सामान्यबलम् ॥ केन्द्रायत्रिनवेषु इति । पापेक्षार-हितः क्रूरदृष्टिरहितः नास्तंगतो यो ग्रह इति।मध्याह्ने सूर्यो अर्द्ध-रात्रे शुक्रः दिनान्ते शनिः अस्तकाले चन्द्रः प्रातर्बुधः भूमि-जो रात्र्यन्ते धिषणो गुरुः सदा दिनेरात्रावपि बलवान् । "प्र-थमपद्य ५५ उपः काठः सप्तपद्या ५७ हणोऽपः ॥ षटप-

श्र५८ भवेत्मातः शेषः सूर्योदयः स्मृतः ॥ १ ॥ एवा घटिका उदयात् ज्ञेयाः ॥ ५५ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ॥ ६० ॥ ६१ ॥

अथ दशाक्रमानयनम् ॥

साङ्गेषु खेटेषु लवादिना यो हीनस्तदंशात् प्रथमं विलेख्यम् ॥ ततोऽधिकांशाच्च खचरान्त्र ग्रहाणा-मेवं भवेत्स्पष्टदशाक्रमोऽयम् ॥ ६२ ॥

अथ दशाक्रमो लिख्यते॥ साङ्गेषु खेटेषु इति–साङ्गेषु सलग्नेषु शेषं स्पष्टम् ॥ ६२ ॥

आद्योपान्त्यांच्छोध्य शेषाङ्कैक्येनाप्ता बाणा-ङ्गाग्नयः पादयुक्ताः ३६५ । १५ ॥ घस्ता स्पष्टा निघ्नकस्तेन निघ्नाः पात्यांशाख्या स्याद्दशा घस्त-पूर्वा ॥ ६३ ॥

अथ पात्यांशानाह ॥ आद्योपान्त्याच्छोध्येति सलग्नग्रहेषु यः सर्वेभ्यो हीनांशस्तमादौ संस्थाप्य ततोऽधिकांशाः स्थाप्याः । अग्रिमाग्रिमग्रहापेक्षया पूर्वः पूर्वो ग्रहो हीनत्वेन हीनांशा इति नाम । प्रथमो द्वितीयाच्छोध्यो द्वितीयस्तृतीयात् । एवमग्रेऽपि उपान्तिमोऽन्तिमाच्छोध्यः प्रथमोऽविकृत एव । ततः पात्यांशानामैक्यं कार्यं अपरं नाम शुद्धांशाः । तेनैक्येन सपादा बाणाङ्गाग्नयो घस्तादिना ३६५।१५।३१ भाज्यपाठलब्धं दिनादि गुणको भवति तेन गुणकेन स्वस्वपात्यांशा गुण्याः स्युस्तास्तत्र दिनपूर्विका दशा स्यात् । यन्त्रतो ज्ञेया । यथा सर्वेभ्यो हीनं लग्नं ०।११।१ अतोऽधिकांशाद्गुरोः ७।२।

३२ पातितं ७।४१।३१ एवं यन्त्रतः पात्यांशा ज्ञेयाः । पात्यांशानामैक्यं १९।५। २१ सर्वेभ्योऽधिकांशकसमानं भवतीति मत्यपः ऐक्येन १९।५।११ वर्षवशाद्दिनानि ३६५।१५ भक्तानि लब्धं दिनादि १९।८।१२ अयं गुणकः अनेन १९। १८। १२ लग्नपात्यांशाः ०।११।१ गुणिताः ३।१२०।४९ लग्नदशा । एवं सर्वादीनां पात्यांशा गुण्याः यन्त्रतः ज्ञेयाः ६३

अथ पात्यांशानाह आद्योपान्त्याच्छोध्येति ।

| ल | चू | सू | शु | बु | च | म | श | ऐक्य | |
|---|---|---|---|---|---|---|---|---|---|
| ० | ७ | ९ | १० | १४ | १५ | १८ | १९ | ९५ | हीनांशा |
| ११ | ५२ | २६ | १५ | ५५ | २७ | २१ | ५ | ३५ | नुक्रमेण |
| ० | ३२ | ५१ | २६ | ५४ | ५१ | २ | ११ | ४६ | |
| ० | ७ | १ | ० | ४ | ० | २ | ० | १८ | पत्याशा |
| ११ | ४१ | ३४ | ४८ | ४० | ३१ | ५३ | ४४ | ५० | परनाम |
| १ | ३१ | १९ | ३२ | ३१ | ५७ | १२ | ८ | ११ | शुद्धाशा |
| ३ | १४० | २० | १५ | ८९ | १० | ५५ | १४ | ३६५ | दशादि- |
| ३० | ११ | ४ | २८ | ३८ | ११ | १४ | ४ | १५ | नादि |
| ३९ | ११ | ५६ | ४३ | १३ | २७ | ३१ | ३४ | ३१ | |

पादान्वितैः पञ्चरसाग्निघस्रैर्हृतां निजांशा ग्रहहीनकैक्यैः ॥ सम्भाजिताः स्युः खलु खेचराणां दशा स्फुटा वा क्रमशोऽखिलानाम् ॥ ६४ ॥

अथ मतान्तरेण दशानयनं। पादान्वितैरिति–पादान्वितैरित्यादिभिर्भुववैर्निजांशा ग्रहाणां स्वस्वहीनांशा ग्रहहीनांशानामैक्येन भाज्या लब्धं दशा वामनादीनां मतेनायाति,

परं स्वल्पसम्मतत्वान्नादरणीया । अस्योदाहरणं हृतमग्रे पुनरनुक्तमपि प्रकारान्तरं क्षिपते यथा वर्षदशादिनादिभिः ३६५।१५।३१पात्यांशा गुण्याः पात्यांशानामैक्येन सम्भाजिते भाज्याप्तलब्धं वा दशा भवति । यथा वर्षदशादिनैः ३६५।१५।३१ लग्नपात्यांशा ०।११।१ गुणिताः ६७।३।५६पात्यांशानामैक्येन १९।५।११ भक्ताः लब्धं३।२०।४९ लग्नदशा । एवं सर्वेषां कर्तव्यः ॥ ६४ ॥

वामनमते दशायन्त्रम् ।

| ल | बृ | सू | शु | बु | च | म | श | ऐक्य |
|---|---|---|---|---|---|---|---|---|
| ० | ३ | ३६ | ३९ | ५८ | ५९ | ७० | ७२ | ३६५ |
| ४२ | ५ | ५ | ११ | ३ | ५ | ६ | ५५ | ५ |
| ५ | २८ | ५० | १७ | ६ | १० | ५६ | ३४ | ५६ |

अथान्तर्दशासाधनम् ॥

शुद्धांशयोगेन दशा ग्रहाणां भक्ता दिनाद्या निहिता फलेन ॥ शुद्धांशकास्त्वन्तरजा दशा स्याद्दिनादिका पाकदशाक्रमेण ॥ ६५ ॥

अथान्तर्दशासाधनमाह ॥ शुद्धांशयोगेनेति—यस्य ग्रहस्य दशायामन्तर्दशा क्षिपते तस्य दशाप्रमाणं पात्यांशानामैक्येन भाज्यं लब्धेन पात्यांशा गुण्या अन्तर्दशाप्रमाणं स्यात् । पाकदशाक्रमेण मूलग्रहदशाक्रमेणेत्यर्थः । यथा गुरुदशादिनानि १४७।११।११ पात्यांशानामैक्येन १९।५।११ भागे लब्धं ७।४२।४२ अनेन गुरुपात्यांशा ७४८।३८। गुणिताः ५९।१९।३१ एवं पात्यांशाः सर्वेषां गुण्याः ॥ ६५ ॥

गुरुदशामध्येऽन्तर्दशाचक्रमिदम् ।

| बृ | सू | शु | बु | च | म | श | ल | ऐक्य |
|---|---|---|---|---|---|---|---|---|
| ५९ | १२ | ६ | ३९ | ४ | २२ | ४ | १ | १४७ |
| १९ | ७ | १४ | ३ | ६ | १५ | ४० | २४ | ११ |
| ३ | १९ | १६ | १५ | २३ | ३९ | २० | ५७ | १२ |

तुल्यौ लवाद्यौ यदि भुक्तखेटौ स्यातां तयोर्यो बलवांस्तदाद्या ॥ वीर्ये समे योऽल्पलवः स पूर्वं ज्ञेयो दशायाः क्रम एवमत्र ॥ ६६ ॥

अथदशाक्रमे विशेषमाह ॥ तुल्यौ लवाद्याविति— यदि द्वौ ग्रहौ समांशकैर्भवतस्तदा तयोर्यो बलवान् स आद्यः वीर्ये तुल्येऽल्पगतिर्मन्दगतिः पूर्वं स्थाप्यः । शेषं स्पष्टम् ॥ ६६ ॥

वीर्ये समाने तनुखेटयोश्च स्यातां तदा लग्नपखेटयोश्चेत् ॥ यस्याल्पभुक्तिः खलु पूर्वकोऽसौ ज्ञेयो दशाज्ञैर्ग्रहपाकमार्गे ॥ ६७ ॥ अन्तर्दशाश्चोपदशा ग्रहाणां साध्या बुधैः सूक्ष्मफलाय नूनम् ॥ वदन्ति केचिद्ग्रहभुक्तिभागैर्दशाक्रमो वामनपूर्वकाश्च ॥ ६८ इति वर्षेशदशाक्रमः ॥

वीर्ये इति—यदि लग्नखेटयोर्बलसाम्यं तदा लग्नेशग्रहयोर्मध्ये लग्नेशोऽल्पभुक्तिः तदा लग्नं प्रथमं ततो ग्रहः । एवं नो चेत्तदा पूर्वं ग्रहस्ततो लग्न इति । एवमन्तर्दशापि कार्या । वामनपूर्वकाः ग्रहभुक्तिभागैर्दशाक्रमं वदन्ति । यथा सलग्नग्रहाणां भुक्तांशा वर्षदशादिनैः ३६५।३१ गुण्या ग्रहाणां भुक्तानामैक्येन भाज्याल्लब्धं दशा । यथा लग्नभुक्तांशाः ०।११।११ वर्षमानेन ३६५।१५।३१ गुणिताः ६७।३।५६ हीनांशानामैक्येन ९५।३५।४६ सवर्णितेन ६७ एतदर्कषष्ट्या संगुण्य यथोक्तयोज्याः ॥ पुनः समागताङ्कषष्ट्या संगुण्य ५६ मध्ये योज्याः । पुनः समागताङ्क-षष्ट्या गुण्य ४६ योज्याः ।

न्तम् ॥ ८१ ॥ विघातोऽर्थनाशः स्वभृत्यैर्विरोधं महासङ्कटे मृत्युकष्टं स्वदेहे॥ कुजे दग्धवीर्ये तु वीर्यस्य नाशो भयं शत्रुतो रक्तपीडा नराणाम् ८२॥ लग्नात्त्रिषष्ठायगतो महीजो निन्द्योऽपि सोऽर्द्धं फलदो दशायाम् या० ॥ इतीदं भौमदशाफलम् ॥ अथ बुधदशाफलम् ॥ स्वबुद्धितोऽर्थागमनं च राज्यं सौख्यं स्वहस्तार्जितवित्तसञ्चम् ॥ सम्पूर्णवीर्यान्वितसोमसूनुर्दत्ते विलासं स्वजनैश्च भृत्यैः ॥८३॥सद्बुद्धिवृद्धिः सुतवित्तलाभं विद्याविलासं स्वजनैश्च सौख्यम् ॥ सोमात्मजो मध्यबलो दशायां दत्ते हि सौख्यं विविधैः प्रपञ्चैः ॥ ८४ ॥ कष्टोदयं सौख्यबलार्थनाशं कीर्तिक्षयं भीतिरुजार्तिसुग्रम्॥ प्राप्नोति वैरं स्वजनैश्च भृत्यैर्निन्द्यो विपाके च शशाङ्कसूनोः ॥ ८५ ॥ स्वजातितो बन्धनमुग्रवैरं कुर्य्याच्च लोकैः सह चाल्पसौख्यम्॥ वित्तार्थनाशं कुमतिं कृशत्वं पुंसां विशेषेण बुधो हि दग्धे ॥ ८६ ॥ त्यक्त्वा चरं ध्वांक्षमतोऽन्यगेहे निन्द्योऽपि सोऽर्द्धं फलदो दशायाम्॥ याति त्वसौ मध्यबलः शुभत्वं सम्पूर्णवीर्योऽतिशुभो निरुक्तः ॥८७॥ इति बुधदशाफलम् ॥ अथ गुरुदशाफलम्॥ ऐश्वर्य्यलाभं नृपतेश्च मानं कान्तोदयं राज्यसमागमं च ॥ प्राप्नोति नूनं सबले सुरेज्ये

हेमाम्बराढ्यं विविधं विलासम् ॥ ८८ ॥ व्या-
पारतोऽर्थागमनं गुरुत्वं भूपात्सुहृत्वं सुतदारसौ-
ख्यम् ॥ प्राप्नोति मित्राम्बरधर्मलाभं वाचस्पते-
र्मध्यबलस्य पाके ॥ ८९ ॥ दारिद्र्यदुःखैः परि-
पीडिताङ्गः धर्मार्थनाशं रिपुजं भयं च ॥ स्त्रीपुत्र-
मित्रैः कलहं सुरेज्यो नष्टो विनष्टं प्रकरोति
सर्वम् ॥ ९० ॥ दुष्टामयार्त्तिं धनधान्यनाशं रिपो-
र्भयं वा नृपतेस्तथैव ॥ सुखक्षयं मित्रसुतैर्विरोधं
करोति दग्धः सुरराजपूज्यः ॥ ९१ ॥ लग्नात्प-
ष्टान्त्यगतो विवीर्यो वाचस्पतिः शेषगतोऽर्थदः
स्यात् ॥ याति त्वसौ मध्यबलः शुभत्वं सम्पूर्ण-
वीर्योऽति शुभो निरुक्तः॥९२॥ इति गुरुदशाफ-
लम् ॥ अथ भृगुदशाफलम्॥ राज्यं कलत्रं च सुखं
विलासं दत्ते धनं काञ्चनभूपमानम् ॥ शुक्रस्य स-
म्पूर्णबलस्य पाकः पुत्रोदयं मित्रसमागमं च ९३॥
स्त्रीपक्षतोऽर्थागमनं च सौख्यं मिष्टान्नपानाम्ब-
रसुन्दरेश्च ॥ दैत्याधिपो मध्यबलो हि दत्ते गो-
वाजिमित्राणि धनानि शीघ्रम् ॥ ९४॥ इतस्ततः
सम्भ्रमणं च पुंसां करोति विज्ञानयशोऽर्थनाशम् ॥
सहोत्थमित्रात्मजकामिनीभिः क्लेशं सितो नष्ट-
बलोऽतिकष्टम् ॥ ९५ ॥ पुत्रक्षतिं रोगभयं च
शोकं सुखार्थनाशं स्वजनैर्विरोधम् ॥ प्राप्नोति

दग्धे भृगुजे नितान्तं स्वमित्रदारारिभयं च पुंसाम् ॥ ९६ ॥ व्ययाष्टकर्मारिगतं विहाय दैत्याधिपः शेषगृहेऽर्थदः स्यात् ॥ ९७ ॥ इति भृगुदशाफलं ॥ अथ शनिदशाफलम् ॥ प्राप्नोति सम्पूर्णबलेऽर्कपुत्रे नीचाधिपत्वं भ्रमणं कुधान्यम् ॥ दुर्गादिवस्वामिमथो सुखाप्तिं वासांसि जीर्णानि वराङ्गनाभिम् ॥ ९८ ॥ खरोष्ट्रकोशादिकदुर्गरक्षां शनैश्चरो मध्यबलोऽतिचिन्ताम् ॥ करोत्यनर्थागमनं खलत्वं सुखार्थनाशं स्वजनैर्विरोधम् ॥ ९९ ॥ धनक्षयं वैरिनृपादिभीतिं करोति वैरं स्वजनैः स्वमित्रैः ॥ पतङ्गजो नष्टबलो नराणां सुखं न किंचित्स्वदशाप्रवेशे ३०० ॥ वियोगदुःखैः परितप्तदेहं मित्रार्थनाशं मरणं प्रकुर्यात् ॥ खरांशुजो दग्धबलो हि दग्धं सुखं स्वदारैः स्वसुतैर्विवादम् ॥ १ ॥ लग्नात्रिषष्ठायगतोऽर्कपुत्रो निन्द्योऽपि सोर्द्ध फलदो दशायाम् ॥ याति त्वसौ मध्यबलः शुभत्वं सम्पूर्णवीर्योऽतिशुभो निरुक्तः ॥ २ ॥ इति शनिदशाफलम् ॥ चरे विलग्ने प्रथमे विभागे श्रेष्ठा दशा यस्य तनोर्निरुक्ता ॥ मध्या द्वितीये त्वधमा तृतीये व्यस्ता दशा स्याद्विकृतेस्तनोश्च ॥ ३ ॥

व्यस्ता दशा स्याद्विकृतेस्तनोश्चेति— द्विःस्वभावराशौ लग्ने प्रथमद्रेष्काणे अधमा द्वितीयद्रेष्काणे मध्यफला तृतीयद्रेष्काणे श्रेष्ठा इति स्पष्टम् ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ ॥ ३०० ॥ ३०१ ॥ ३०२ ॥ ३०३ ॥

पूर्वे त्रिभागे स्थिरभे च नष्टा दशा द्वितीये खलु पूजिता स्यात् ॥ मध्या तृतीये कथिता त्रिभागे ज्ञेयं फलं स्वे स्वदशादिभेदैः ॥ ४ ॥ इति लग्नदशानयनम् ॥ अथ लग्नदशाफलानि ॥ हेम मुक्ताफलं द्रव्यं लाभमारोग्यमुत्तमम् ॥ कुरुते स्वामिसन्मानं दशा लग्नस्य शोभना ॥ ५ ॥ लब्धिः कष्टेन वित्तस्य मैत्री हीनस्य सेवनम् ॥ मनसो विकृतिं कुर्याद्दशा लग्नस्य मध्यमा ॥ २ ॥ विदेशगमनं क्लेशं बुद्धेर्नाशं कलिर्भयम् ॥ मानभङ्गं भवत्येव कष्टं लग्नदशाफलम् ॥ ३०६ ॥ इति लग्नदशाफलानि ॥ अथान्तर्दशाफलानि तत्रादौ रविमध्येऽन्तर्दशाफलम् ॥ राज्यप्रसादं धनधान्यलाभं सुतागमं मित्रसुतोदयं च ॥ भानोर्दशायां यदि भूमिसूनुः करोति रक्ताम्बरभूमिलाभम् ॥७॥ सुखार्थनाशो रिपुरोगभीतिर्निरुद्यमत्वं व्यसना-

लम् ॥ अथ बुधमध्येऽन्तर्दशाफलम् ॥ आरोग्यतां साधुजनेषु सौख्यं भोगान् विचित्रान् द्विजदेवसेवाम् ॥ दशा यदा देवगुरोः प्रयाता चान्द्रेर्दशायां प्रकरोति मानम् ॥२४॥ सौम्याम्बरस्थानचतुष्पदानां लाभं च सौख्यं बहुलं विलासम् ॥ शौक्री दशा सौम्यदशाप्रवेशे महाप्रतिष्ठां प्रकरोति पुंसाम् ॥२५॥ वातार्चिकृत्कष्टमनल्परोगं कान्तेर्विनाशं नृपतेर्भयं च ॥ सौम्यस्य पाके यदि सूर्यसूनोर्दशा प्रयाता बहुवित्तनाशम् ॥ २६ ॥ मानार्थलाभं प्रकरोति पुंसां लाभं क्षितीशात्स्वजनाच्च सौख्यम् ॥ प्राप्तस्य सूर्यस्य दशा दशायां सौम्यस्य नित्यं विविधं विलासम् ॥ २७ ॥ कष्टं शरीरे निजबन्धुवैरं सौख्यार्थनाशं च भयं क्षितीशात् ॥ वातव्यथां सोमदशा प्रपन्ना चान्द्रेर्दशायां प्रकरोति सौख्यम् ॥ २८ ॥ व्रणोदयं दद्रुविचर्चिकार्चिं सुखार्थहानिं बहुलं च कष्टम् ॥ करोति सौम्यस्य दशाविपाके दशा हि भौमस्य परैर्विवादम् ॥ २९ ॥ इति बुधमध्येऽन्तर्दशाफलम् ॥ अथ गुरुमध्येऽन्तर्दशाफलम् ॥ वातोदयं वातकफोदयं च धर्मार्थनाशं रिपुरोगभीतिम् ॥ भृगोर्दशा जीवदशाविपाके नृणां विधत्ते सुबहु प्रतापम् ॥ ३० ॥ परैर्विरोधं बहुलं च कष्टं कफोदयं धर्मधनक्षयं च ॥ सौरेर्दशा जीवदशाविपाके नृणां विधत्ते नृपतेर्भयं च ॥३१॥

स्त्रीपुत्रमित्रैर्विविधं विलासं प्रपूजनं देवगुरुद्विजानाम् ॥ शत्रोर्विनाशं प्रकरोति भानोर्दशा प्रयाता च गुरोर्दशायाम् ॥ ३२ ॥ माणिक्यमुक्ताफलहेमलाभं सौख्यानि दत्ते विविधं नराणाम् ॥ चान्द्री दशा जीवदशाविपाके सर्वार्थलाभं विपुलं नितान्तम् ॥ ३३ ॥ मानं नृपाद्राजजनात्सुहत्वं रिपोर्विनाशं प्रकरोति लाभम् ॥ वित्तस्य भौमस्य दशा दशायां गुरोर्नराणां बहुलं सुखं च ॥३४॥ यशःप्रणाशं स्वजनैर्विरोधं करोति मिथ्याकलहं स्वदारैः ॥ शशाङ्कसूनोश्च दशा प्रयाता गुरोर्दशायां त्वसुखं च कष्टम् ॥३५॥ इति गुरुमध्येऽन्तर्दशाफलम् ॥ अथ भृगुमध्येऽन्तर्दशाफलम् ॥ द्रोहं स्ववर्गे च परैर्विवादं सुखार्थलाभं प्रकरोति पुंसाम् ॥ प्रमोदनिद्राकलहं दशायां शुक्रस्य मध्ये हि दशाप्रवेशः ॥३६॥ दुष्टादयं भूपतितो भयं च पित्तोदयं देहबलार्थनाशम् ॥ भानोर्दशा दैत्यगुरोर्दशायां नृणां विधत्ते परमं च कष्टम् ॥ ३७॥ स्वल्पार्थलाभं कफशीतपीडां स्वमित्रपुत्रैः स्वजनैश्च दारैः ॥ क्रूरां विधत्ते भृगुजस्य पाके प्रयाति ताराधिपतेः प्रमोहम् ॥ ३८ ॥वेश्यानुरागं च विपक्षभीतिं वातासृक्‌-धर्मधनक्षयं च ॥ दशा च भौमस्य भृगोर्दशायां प्राप्ता च पुंसां न सुखं कदाचित् ॥३९॥ सद्बुद्धिवृद्धिं द्विजदेवभक्तिं विनो-

यथा दशा भवति । द्वितीयभवने दृष्टे पूर्वपात्यांशानामैक्येन द्वितीयमासतृतीयमासयोरन्तरं भाज्यं लब्धं गुणकः शेषं पूर्ववत् । एवं द्वादशभावे ग्रहैर्दृष्टे द्वादशमासाग्रिमवर्षप्रथममासयोरन्तरं कार्यम् शेषं प्राग्वत् । यथा लग्नं प्रति यावन्तो ग्रहाः पश्यन्ति तावन्तो ग्रहा हीनांशा मार्गेण लिखिता यन्त्रे ततः पात्यांशा यन्त्रे पात्यांशैक्येन १९ । ५ । ११ प्रथममासद्वितीयमासयोरन्तरे दिनादि ३१ घटी३१ पल८सवर्णितेन भक्ते लब्धं १ । ३९ । ५ गुणकः अनेन पात्यांशा गुणिता दशा याता यन्त्रतो ज्ञेया । अथ द्वितीयभावं प्रतिपादं त्रिरुद्रेषदलमित्यादि दृष्ट्या यावन्तः पश्यन्ति तावन्तो हीनांशरीत्या लिखिता यन्त्रे ततः पात्यांशानामैक्येन १८ । २८ । ३ द्वितीयमासतृतीयमासयोरन्तरं ३१ । ३४ । ४५ सवर्णितेन भक्ते १ । ४३ । १५ गुणकः । अनेन पात्यांशा गुणिता जाता दशा यन्त्रतो ज्ञेया। एवं सर्वेषां भावानां दशा कार्यां ॥ ४८ ॥ ४९ ॥

द्वितीयभावप्रति दृष्टारो ग्रहाः ।

| श | सू | शु | बु | च | म | ऐक्य | ग्रहाः |
|---|---|---|---|---|---|---|---|
| ७<br>५२<br>२२ | ९<br>२६<br>५१ | १०<br>५<br>२३ | ११<br>५५<br>५४ | १५<br>२७<br>५१ | १८<br>२१<br>३ | १८<br>२१<br>३ | हीनांशा. |
| ७<br>५२<br>३२ | १<br>३४<br>१९ | ०<br>४८<br>१२ | ४<br>४०<br>२० | ७<br>३८<br>५७ | २<br>५३<br>१२ | १८<br>२१<br>४० | पात्यांशाः |
| १३<br>१३<br>९ | २<br>४२<br>१८ | १<br>२३<br>२० | ८<br>२<br>४१ | १<br>२०<br>४१ | ४<br>५८<br>२ | ३१<br>४०<br>११ | दशादिनानि |

अथ भावतसीरदशा ॥ लग्नादिरिष्फान्त्यग्रहाद्विशोध्याः परस्परं शेषदशा ग्रहाणाम् ॥ यत्ता-दिका भाववदत्र नूनं फलं प्रवीणैः परिचिन्त्यमत्र ॥ ५० ॥ इति भावतसीरदशा ॥

अथ भावतसीरदशासाधनमाह ॥ लग्नादिरिष्फान्त्यगृहादिति-लग्नमादिर्येषां ते रिष्फं अन्त्यं येषां ते लग्नादिरिष्फान्त्यास्ते च ते गृहाश्च तानि परस्परं विशोध्य लग्नं द्वितीयात् द्वितीयं तृतीयाच्छोध्यं एवं सर्वान् भावान् परस्परं विशोध्य शेषराशीनामंशान् कृत्वा यथा लग्नम् ३ । ० । ११ । १ द्वितीयभावः ३ । २७ । २० । १५ स्फुटं ० । २७ । ८ । १४ अत्र राशयो न सन्ति तेनांशा एव दिनानि । एवं द्वादश १ । २७ । २० । १५लग्नात्३।०।११।१ स्फुटं १ । २ । ५० । ४६ राशेरंशाः ३० अधोंऽशाः २ मध्ये क्षिप्ता दशा। दिनादि ३२ । ५० । ४६। यन्त्रतो ज्ञेया ॥ ५० ॥

अथ स्थूलतः भावतसीरदशा ॥ भावस्य चोर्ध्वाङ्कमितिः शरघ्ना हीना खरामेन्दुलवैर्दिनाद्याः ॥ स्पष्टा दशा लग्नमुखादिकानां ज्ञेया फलान्यत्र बुधैः स्वभाव्य ॥ ५१ ॥ इति स्थूलभावतसीरदशाचक्रम् ॥

| स्थूलभावतसीरदशायन्त्रदिनानि ३६९।१७ | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | भावत- |
| २९ | २७ | २५ | ३२ | ३२ | ३२ | २७ | २७ | २७ | ३२ | ३२ | ३२ | सीरदशा |
| ९ | ९ | ९ | ५० | ५२ | ५० | ९ | ९ | ९ | ५० | ५० | ५० | यन्त्रैकदम |
| १९ | २४ | १४ | ४६ | ४६ | ४६ | १४ | १४ | १४ | ४६ | ४६ | ४६ | ३६०१थू |
| ११ | ११ | १८ | २३ | २७ | ३२ | ४१ | ४१ | ४१ | ४६ | ५५ | ४ | लग्न दिन- |
| ५१ | ५१ | २८ | ५ | ४२ | १९ | ३३ | ३३ | ३३ | १० | २३ | ३७ | मानानि |

अथ स्थूलभावतसीरदशासाधनम् ॥ भावस्य चोर्ध्वाङ्कमितिरिति–स्पष्टः । यत्र भावोर्ध्वाङ्कप्रमाणं शून्यं

तत्र द्वादश पञ्चगुणाः कार्याः इत्यर्थः। यथा प्रथमभावोऽभ्यांक-प्रमाणं ३ पञ्चगुणं १५ खरामेंदु १३० भागेन १ । ९ हीना १३।५१ दिवादिस्थूलदशा एवं द्वादशभावानां कार्या । पत्रै-कादितो द्वादशपर्यन्तं उपरि राशयो भवन्ति तन्नैक्ये कृते दि मानां पञ्चाधिकं शतत्रयं भवति अन्यत्र न्यूनाधिकं भवतीति स्थूला ॥ ५१ ॥

अथ मासप्रवेशः ॥ स्फुटो भास्करो भादिको जन्मतुल्यो भवेद्यत्र काले त्वमादिस्तदा स्यात् ॥ सचन्द्रान्वितो मासि मासि प्रवीणैर्ध्रुवं प्रस्फुटो मासवेशस्य भानुः ॥ ५२ ॥

अथ वसीरदशाकरणार्थं मासप्रवेशोदाहरणं स्फुटो भास्कर इति—स जन्मतुल्योरविर्मासि मासि एकराशिपुतो मासस्य रविर्भवति शेषं स्पष्टम् । चन्द्रारजीवा बुधजीवशुक्रा दिवाकरेन्दू रविजज्ञशुक्राः॥ बुधजीवसौराः जीवज्ञशुक्रा रवितः प्रसिद्धाः॥ १॥ एवमेतेऽन्तर्दशाया पाचकाः शुभदा ग्रहाः अन्ये-त्वशुभदा ज्ञेयाः एवमन्तर्दशाफलम् ॥ ५२ ॥

स्पष्टार्कस्य कला हृता खखगजै ८०० र्लब्धं गतर्क्षाणि तत् शेषं यत् पृथगाहतं निजगुणैर्भक्तं खशून्याष्टभिः ८०० ॥ नाड्याद्येन फलेन विघ्नशतो युक्तोनितं तद् बुधैः कार्यं भास्करभाङ्गवेद्धिनियतं मासस्य वेशः क्रमात् ॥ ५३ ॥ अथ सर्वर्क्षोपरि मासप्रवेशः॥ पतङ्गस्य लिप्ताः खखाष्टै-००र्विभक्ता गतर्क्षाणि लब्धं तु सर्वर्क्षनिमात्॥

विशेषात् खखाभ्राष्टवेदै ४८००० र्विभक्तैर्दिनेमीसवेशो रवेर्ऋक्षतः स्यात् ॥ ५४ ॥

अथ मासप्रवेशसाधनमाह ॥ स्पष्टार्कस्य कला इति—श्लोकाहरणव्याख्या। यथा सूर्यः १।९।२६।५१ राशि १ युतो द्वितीयमासस्य भानुः २।९।२६।५१ अस्य कलाः ४११६६।५१ खखगजै ८०० र्भक्ता लब्धम् ५ अश्विनीतः पञ्च ५ नक्षत्राणि भुक्तानि पष्ठं भोग्यं १६६।५१ इदं पृथक् १६६।५१ निजगुणैराहतं गुणितमिति। गुणको वक्ष्यति "सर्वर्क्षनाड्यः खखसर्प ८०० केभ्यः" इत्यादिना भोग्यनक्षत्रस्य सर्वर्क्षनाड्यो यावत्यः खखसर्पके ८०० भ्योऽधिका ऊना वा तावान्निजगुण इति। खखसर्पके८०० भ्योऽधिकासु सर्वर्क्षनाडीषु धनसंज्ञः ऊनासु ऋणसंज्ञो यथाऽत्र पष्ठं भोग्यं आर्द्रानक्षत्रस्य तस्य सर्वर्क्षनाड्यः ८४३।२४ अष्टशतीभ्योऽधिका उभयोरन्तरं ४३।२४ शेषं १६६।५१ गुणितं ७२४१।१० नगुन्याटभिर्भक्ते लब्धं नाड्यादि ९।३ इदं गुणकस्य धनसंज्ञत्वाच्छेषकूमध्ये १६६।५१ युतं १७५।५४ षष्ट्या च हाविन वारादि २।५५।५४ युतं जातं ७।४० उपरि सप्तभक्ते शेषं शनिवारे। उदयात् घट्यः ४४।१२ आर्द्रारविसंक्रान्तेन वारादि ५ घटी ४४।१२ मध्ये पूर्वागतं वारादि।२।५५।५४ युतं जातं ७।४० उपरि सप्तभक्ते शेषं शनिवारे उदयाद्घट्यः ४० प० ६ समये द्वितीय-

स्पष्टः । ३।१।२६।५८ कला ५१६६।५१ खखगजैर्भक्ताल्लब्धं ७ अष्टमं भोग्यं शेषं ३६६ । ५७ पुष्यनक्षत्रस्य सर्वर्क्षनाड्यः ८४१ । १५ पूर्ववद्गुणको ४१ । १५ धनसंज्ञकः अनेन शेषं पृथक्स्थं ३६६ । ५१ गुणितं १३९३२ खखगजै८०० र्भक्ते लब्धं घट्यादि १७ । २४ शेषं ३६६ । ५१ मध्ये युतं ३८४ । १५ वारादि ४ । २४ । १५ सूर्यभोगनक्षत्रं पुष्यस्य वारादि ४ । ५० । ३६ मध्ये युतं पातं ११ । १४ । ५१ उपरि सप्तभक्तं एवं बुधवारे उदयात्तत्वघट्यः १४ । ५१ सप्तमास ३ प्रवेशः ॥ ३ अथ लग्नार्थं अयनांशैः १७ । ५१ । १५ रविः ३ । ९ । २६ । ५१ युवः ३ । १७ । १८ । ६ इष्टकालः १४ । ५१ उक्तवल्लग्नम् ५ । २८ । १८ । ४५ ततः कुण्डली ५१ अस्य कला ४१६९ खसाष्ट ८०० भिर्भक्ता लब्धं ५ प्रवेशम् अवशेषमिति "अवाप्योरुपसर्गयोरित्यकारलोपः" १६६ । ५१ । भोग्यनक्षत्रस्य आर्द्रांकस्य सर्वर्क्षेण घट्यादिना ८४३ । २४ गुणितं १४ + ७२० । ५९ खखाभ्राष्टवेदै ४८००० र्भक्तं लब्धं घटादि २ । ५५ । ५४ सूर्यनक्षत्राद्वारादि ४ । ४४ । १२ मध्ये युतं जातं० । ४० । ६ पूर्वतुल्यो मासप्रवेशः । एवं सर्वे मासप्रवेशाः ॥ ५३ ॥ ५४ ॥

अखण्डितानां खलु मासवेशस्त्वेवं भवेत्खण्डित-
तारकाणाम् ॥ एकादिपादोद्भवसर्वनाड्यो हरे-
त्खबुध्यार्कशतादिकैश्च ॥ ५५ ॥ सर्वर्क्षनाड्यः
खखनागकेभ्योऽधिकोनके धिष्ण्यगुणाः क-
लाद्याः ॥ धनाह्वयं स्यादधिके ऋणाख्यो न्यूने हि
निघ्नो द्विशतादिकेश्च ॥ ५६ ॥

अथ मासप्रवेशफलानि॥ प्राग्लग्नस्य पतेर्लवांशपतिना लग्नस्य नाथस्य चेन्मैत्री स्नेहदृशश्चसन्तत्युतिश्चन्द्रस्य दृग्योगतः ॥ मासेऽस्मिन् बहुलं सुखं निगदितं जन्तोस्तदा सूरिभिः कष्टोपद्रवसंक्षयं च सततं चिन्ताविनाशो ध्रुवम् ॥ ५७ ॥ कष्टं रोगभयं करोति नियतं मासे नृणां व्यस्तगो नीचर्क्षानुगतोऽस्तगो यदि तयोरेकश्च कष्टात्सुखम् ॥ मृत्युः स्याद् द्वितयोर्यदा तनुभृतां नीचस्य योगास्तयोर्लग्नस्यांशपतिर्यदा शुभखगैर्युक्तोऽतिशंकारकः ॥५८॥ वित्तस्यांशपतिर्यदा प्रकुरुते मैत्र्यादियोगोद्भवं लग्नस्यांशविभोः समं बहुधनस्याप्तिस्तदा व्यस्तगः॥ हानिः स्यादथ बन्धुतो बहुसुखं बन्ध्वंशनाथेन चेत्तन्वंशस्य पतेः समं यदि भवेन्मैत्र्यादियोगस्तथा ॥ ५९ ॥ सौख्यं स्याद्बहुलं सुतांशपतिना लग्नांशनाथस्यचेन्मैत्र्याद्यं यदि शं करोति च सुखं तद्वत्सुतांशेन तत्॥ षष्ठांशेन रिपोर्जयं बहुसुखं स्त्रीतो मदांशेन वा एवं सर्वग्रहांशकैः शुभतरं कष्टं नृणामन्यथा ॥ ६० ॥ षष्ठाष्टगो लग्नवांशपश्चेद्दुष्टैर्ग्रहैर्युक्तविलोकितश्च॥ मासे नृणां कष्टभयं विवादं सम्यक् करोत्येव न संशयोऽत्र ॥६१॥ लग्नांशनाथोऽथ विलग्ननाथः

धरिविनाशगतस्तनुनायकः खलखगैः सहितः सुरपूजितः॥ तनुभृतां प्रकरोति दिने व्यथां गदपदं बहुलं विबलो यदा॥६५॥ मृत्युस्थिता दुष्टखगाश्च नित्यं कुर्वन्ति सौम्यैः सहिताश्च तस्मिन्॥ घस्रैर्विवादं कलहं स्वशत्रोर्भयं नृणां नैव सुखं कदाचित्॥ ६६॥ सौम्या स्वकेन्द्रात्मजलाभगाश्चेत्पापास्त्रिषष्ठायगता यदि स्युः॥ कुर्वन्ति घस्रे विविधं विलासं विसागमं वैरिभयं नराणाम्॥ ॥ ६७॥ इति दिनचर्याशुभाशुभज्ञानम्॥ यदि विलग्नलवः शुभखेचरैर्बलयुतैः सहितोऽथ विलोकितः॥ बहुसुखं प्रकरोति हिमांशुना धनचयं च तथा विजयं नृणाम्॥ ६८॥ शुभखगैः सहितोऽथ विलोकितो धनलवः प्रकरोति धनं तदा॥ सहजतश्च सुखं सहजांशको यदि शुभैः सहितो विधुना तदा॥ ६९॥ सुखलवो यदि सौम्ययुतेक्षितः शुभतरं स्वजनैः सह भोजनम्॥ सुतसुखं प्रकरोति सुतांशको विधुबुधेज्यसितैश्च युतेक्षितः ॥ ७०॥ रिपोर्गृहांशः शुभखेटयुक्तः करोति रोगादिभयं नृपाणाम्॥ शुभैश्च जायांशगतैर्विलासं स्वभार्यया दुष्टखगैः खलत्वम्॥ ७१॥ वध्वंसकः सौम्यखगान्तरस्थः सौम्यस्तथा दारसुखं च पुंसाम् ॥ शुक्रज्ञजीवैः सबलैश्च सौख्यं सप्तस्थितैर्वा बहुसुन्दराभिः॥ ७२॥ विलग्ननाथः शुभयुक्तदृष्टः केन्द्रत्रिकोणानुगतो बलिष्ठः॥ सौख्यं विलासं

निरुजं नितान्तं नृणां करोत्येव समेश्वरे वा॥७३॥
रन्ध्रांशको रन्ध्रगतः समेतः सौम्यैर्विधत्ते मरणं
रणादौ॥ मिश्रैर्विमिश्रं च खलैः शुभत्वं धर्मांशके
धर्ममतिः सुपात्रे॥७४॥ भूपात्पदं सोमयुतैश्च
सौम्यैः कर्मान्तकस्थैर्नृपतेर्धनाप्तिम्॥ लाभान्त-
कस्थैः सितसोमजीवैर्लाभो महान् मिश्रखगैश्च
मिश्रम्॥७५॥ व्ययः शुभः स्याद्व्ययभांशयातै-
र्बुधेज्यशुक्रैस्तु शुभैश्च हानिः॥ दिने दिने भूमि-
भृतां सदैवं फलं विलोक्यं सुधिया ग्रहोत्थम्॥
॥७६॥ इति दिनचर्यायां भावाध्यायः॥ षष्ठा-
ष्टगो भौमयुतः शशाङ्को दत्ते ह्यसौ शस्त्रभयं नरा-
णाम्॥ भौमोऽष्टमस्थोऽरिभयं च विघ्नं सूर्यस्तथैवं
प्रकरोति नूनम्॥७७॥ रात्रीश्वरो रन्ध्रगतः स
पापः करोत्यरिष्टं सबलश्च पुंसाम्॥ क्रूरैः सुख-
स्थैर्गजवाजियानात् ध्रुवं प्रपातो बहुलां च पी-
डाम्॥७८॥ सप्तस्थितैः सौम्यखगैर्बलाढ्यैर्दु-
रोदरात्संविजयं करोति॥ धर्मार्थलाभं नवमोप-
यातैर्विलग्नतो वाक्पतिसौम्यशुक्रैः॥७९॥ न-
गपराक्रमशत्रुभवस्थितैः शशिसुरेज्यदिनेशसितै-
र्यदा॥ नवमकेन्द्रगतैश्च तदा जनो भुवितले र-
मते बहुभार्यया॥८०॥ वेश्यामध्यरतिं करोति
रविजः सप्तस्थिते निर्बलो भौमो वा सबुधः सितो
मदगतः सौख्यं स्वदारोद्भवम्॥ नूनं देहभृतां सु-
रेज्यभृगुजौ सप्तस्थितौ भोगदौ नानास्त्रीजनितं

श्रे सक्रुद्विप्रकृतौ विचारम् ॥ सूर्य्यादयः स्वोच्चगताः
स्तनुस्था नृपादिगेहेषु शुभैर्विचिन्त्यम् ॥ ९१ ॥
अथ भोजनचिन्ता॥ वीर्य्याढ्ये तपने तिला हिम-
रुचौ चेत्तण्डुला भूमिजे भोज्यं स्याच्चणका बुधे-
र्निगदिता वल्लाश्च मुद्गामगः ॥ माषा रत्ननिभाः
सुरेश्वरगुरौ गोधूमकंगूयवाः दैत्येज्यस्य गुरौ ज-
वारिरथवा वीर्यान्विते वर्जरी ॥ ९२ ॥ माषा वा
कुलथा गुवारि रविजे राहोरुपान्नं स्पृतं तिक्तं घ-
स्रपतौ तथा च लवणं सोमे कुजे तिक्तकम् ।
मिश्रं सोमसुते गुरौ हि मधुरं चाम्लं बलाढ्ये
सिते मन्दे स्यात्तुवरं बुधैर्निगदितं घस्रे नृणां चे-
दिदम् ॥ ९३॥ सूर्ये मूलसमुद्भवं हिमरुचौ पुष्पस्य
शाकं कुजे शाकादेव गुरौ सुदैत्यसचिवे चानेक-
दाल्यं शनौ ॥ अन्नोत्थं मुंगलावकादिजनितं
राहौ च शाकं बुधैरेतत्सत्पुरुषाय वीर्यवशतो
वाच्यं ग्रहैशैः सदा ॥९४॥ इति भोजनचिन्ता ॥
अथ स्वप्नचिन्ता॥ लग्ने रवौ लग्नवांशके वा स्वप्ने
प्रपश्येदहितादि वस्तु ॥ वह्निस्ततो घस्रपतेश्च
बिम्बं चन्द्रे स्त्रियं शुभ्रतरं च पुष्पम् ॥९५॥ कुम्भा
तथा भूमिसुते सुवर्णं रक्ताम्बरं विद्रुमरक्तवस्तु ॥
ज्ञे पुण्यवार्ता गमनं स्वमार्गे पश्येद्विलग्नोपगतेऽ-
ङ्गे वा ॥ ९६ ॥ क्रीडा हि विद्यापठनं सुरेज्ये
स्त्रीसुरतं च शुक्रे ॥ कुम्यश्च पोतो मरणं
संक्रीडनं चाक्षविलासमत्र ॥ ९७ ॥ मन्दे-

बलाढ्ये वनपर्वतेषु गतिः प्रवाच्या यवनारिभी-
तिः ॥ स्वप्नेऽपि राहौ खलसङ्गमश्च मित्रैर्विमिश्रं सततं प्रवाच्यम् ॥ ९८ ॥ इति स्वप्नचिन्ता ॥

अथ भोजनप्रश्नफलम् ॥ भोज्यान्नदो लग्नपतिरिति-लग्नपतिर्लग्नेशो भोज्यमन्नं ददाति स ज्ञेयः सुखेशश्चतुर्थेशो भोज्यमन्नादिवस्तु भोक्तुं योग्यं । मदपः सप्तमभावस्वामी बुभुक्षा क्षुधा। कर्माधिपो दशमेशो भोक्ता भोजकः । अयो आनन्दार्थे मंगलार्थे भववेश्मलग्ने एकादशचतुर्थभवने उभे शुभैर्दृष्टियुते सुभोज्यम् । उक्तं च "भोज्यदाता तनुस्वामी भोज्यं हि सुखवेश्मपः ॥ द्यूनपश्च बुभुक्षोक्ता भोक्ता व्योमाधिपो मतः॥ १॥ लाभवेश्मनि लग्ने च शुभदृष्टे सुभोजनम्' ॥ इत्यर्थः। तद्राशिपगेहत इति-चतुर्थभवनपतिग्रहजातिगृहतः पूर्वं ब्राह्मणाद्या ग्रहाणां जातिरुक्ता तज्जातिगृहाद्भोजनमित्यर्थः । विशेषो ग्रन्थान्तरात् "वर्ण्यं च दशमे चन्द्रे भौमे तथ कुजेऽमृतम् ॥ सूर्ये तुर्ये तु तिक्तं स्याद् बुधे तु कटुकं स्मृतम् ॥ गुरौ सुमधुरं प्रोक्तं बुधे चाम्लं प्रकीर्तितम्॥ स्निग्धं शुक्रे शनावम्लभुग्यगे संस्कृतं स्मृतम् ॥ २ ॥ नीचे कदशनं प्रोक्तं संस्काररहितं पुनः ॥ लग्नेशेऽतिदीप्तः स्वोच्चे नृपादिगृहभोजनम् ॥ ३ ॥ मूलत्रिकोणगे गेहे स्वपितुस्तत्र भोजनम् ॥ मित्रवेश्मनि मित्रर्क्षे समे समगृहे पुनः ॥ ४ ॥ शनौ श्वशुरगृहे भुङ्क्ते अन्यदूरं स्वबुद्धितः ॥ लग्ने तुर्ये गुणाधिके स्वगृहे भोजनं वदेत् ५ ॥ " एवं मया स्वबुद्ध्यनुसारेण केचिदर्था निर्णीताः ॥ अथ वर्तमानवर्षप्रवेशसमयज्ञानाद्यर्थमहर्गणादि-ज्ञानम् । ग्रहाश्चोत्पन्ने । तत्र प्रथमवर्तमानवर्षप्रवेशसमयं ज्ञात्वाऽहर्गणादि-सर्वं कार्यं ततो वर्षप्रवेशसामयिकाः स्पष्टाः कृत्वा मध्यमा ग्रहाः कार्याः । ततोऽथवर्षप्रवेशसमयात् पूर्वागताहर्गणे पञ्चे त्रिषष्ट्यधिकशतत्रयं ३६३ दिनानि

श्रीसुपोधा-श्रीपति-महादेवीब्रह्मार्कपर्वणा ॥ एतस्या वृत्तयो ज्ञेयाः स्वतो हि हृदयंगमाः॥ १॥ वर्षे शैलहयाब्रभूपरिमिते १६७७ मासे तथा फाल्गुने पक्षे शुभ्रवरे तिथौ दशमिते श्रीपेरवापूर्वरे ॥ राज्ये श्रीमति विष्णुदासनृपतेर्वैरीभवृन्दे हरेर्वृत्तिं श्रीगुरुहर्षरत्नकृपया सामन्तनामाऽकरोत् ॥ २ ॥ गुरुबान्धवरत्नाह्वदीर्घायुर्धनराजयोः ॥ निरन्तरा ग्रहा येषा रचिता वनुताच्चिरम् ॥३॥९९॥ इत्याश्चलिकमहोपाध्यायश्री-उदयराजगणिकुञ्जराणां शिष्योपाध्यायश्रीहर्षरत्नगणिशार्दूलानां शिष्यपद्माद्रिराजसुमतिहर्षगणिकृता वृत्तिकसारटीका कारिका नाम्नी सम्पूर्णा ॥

श्रीकूर्माचलमध्यवर्त्तिविषयेऽल्मोडाभिधं प... मचाल
तस्मात् क्रोशचतुष्टयान्तर उदीच्यां प... पर्वा: अ...
आसीत्तत्र भगीरथाभिधसुधीर्ज्योतिर्विदामग्रणी- ...पि पूर्व
...स्तारायशभसंज्ञकः समभवत्तस्यात्मजो दैववित् ... ॥
...हद्राजसमर्पितानिपशासस्वस्यात्मजो विश्रुतः
तानादासगुणोऽस्म्यहं खलु भवानीदत्तशर्म्मा द्विजः ॥
व्याख्यापेनमनिमपामनिहितं ग्रन्थं त्वमुं धीमतां
मीत्यै सद्विभवः परोपकृतयेऽतो मुद्रयं पत्ततः ॥ २ ॥

इन्द्रवज्रावृत्तम् ॥

वाणेषुगोभूमितविक्रमाब्दे मासे शुचौ कृष्णदलेऽहितिथ्याम्
टीकायुतन्ताजिकसारमेतत् संशोधितं श्रीरघुवंशनाम्ना ॥ १ ।



॥ इति समाप्तम् ॥

श्रीसुपोधा-श्रीपति-महादेवीब्रह्मार्कपर्वणा ॥ एतस्या
त्तयो ज्ञेयाः स्वलो हि हृदयंगमाः॥१॥ वर्षे
१६७७ मासे तथा फाल्गुने पक्षे शुभ्रतरे तिथौ
श्रीपेरवापूर्वरे ॥ राज्ये श्रीमति विष्णुदासनृपतेर्वैरीभवृन्दे
वुर्स्थि श्रीगुरुहर्षरत्नकृपया सामन्तनामाऽकरोत् ॥ २
गुरुवान्धवरत्नाद्दुदीर्घापुर्धनराजयोः ॥ निरन्तरा ग्रहा दे
रविता वनुताच्चिरम् ॥३॥९९॥ इत्याञ्चलिकमहोपाध्याय
उदयराजगणिकुञ्जराणां शिष्योपाध्यायश्रीहर्षरत्नगणिश
लानां शिष्यपञ्चादिराजसुमतिहर्षगणिकृता- वाजिकसारटी
कारिका नाम्नी सम्पूर्णा ॥

श्रीकूर्माचलमध्यवर्त्तिविषयेऽल्मोडाभिधं पत्तनम्
तस्मात् क्रोशचतुष्टयान्तर उदीच्यां पाटियाख्यं पुरम्
आसीत्तत्र भगीरथाभिधसुधीर्ज्योतिर्विदामग्रणी-
स्तारावल्लभसंज्ञकः समभवत्तस्यात्मजो दैववित् ॥ १ ॥
रुद्राजसमार्पितातियशसस्तस्यात्मजो विश्रुतः
तानादात्तगुणोऽस्म्यहं खलु भवानीदत्तशर्म्मा द्विजः ॥
व्याख्योपेतमतिप्रयाससहितं ग्रन्थं त्वमुं धीमतां
प्रीत्यै सद्भिरवः परोपकृतयेऽतो मुद्रयं यत्नतः ॥ २ ॥

इन्द्रवज्रावृत्तम् ॥

बाणेषुगोभूमितविक्रमाब्दे मासे शुचौ कृष्णदलेऽहितिथ्याम्
टीकायुतन्ताजिकसारमेतत् संशोधितं श्रीरघुवंशनाम्ना ॥१

॥ इति समाप्तम् ॥